न कर उसके स्थान में 'बहुलम्' पढ़कर 'उपसर्गादनोत्' के स्थान पर 'उपसर्गाद् बहुलम्' सूत्र सम्प्रति है, उसी को बता रहे है।

## ८६१ उपसर्गाद् बहुलम् ८।४।२८।

उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद् बहुलम्। प्रणसः। ॐवेर्ग्रो वक्तव्यःॐ। विगता नासिका अस्य विग्रः। ॐख्यश्चॐ। विख्यः। कथं तर्हि 'विनसा हतबान्धवा' इति भट्टिः, विगतया नासिकयोपलक्षितेति व्याख्येयम्।

उपसर्ग में स्थित जो रेफ उससे पर नस् के नकार को णकार विकल्प से होता है। प्रणसः, समास, अच् नसादेश, णकार। *वि से पर नासिका को ग्र आदेश होता है। विगता नासिका अस्य विग्रः। वि से पर नासिका को ख्य होता है। विख्यः। विनसा क्यों हुआ ? ग्र या ख्य होना चाहिये, वह प्रथमान्त भट्टि वाक्य नहीं है किन्तु पद्दन्नोमास् से नसादेश युक्त तृतीयान्तरूप नासिका का है विनसया नासिकया युक्ता सा शूर्पणखा। यह भाव है।

## ८६२ सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ५।४।१२०।

एते बहुव्रीहौ अच् प्रत्ययान्ता निपात्यन्ते। शोभनं प्रातरस्य सुप्रातः। शोभनं श्वोऽस्य सुश्वः। शोभनं दिवा अस्य सुदिवः।

शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रोऽश्रयोऽस्य चतुरश्रः। एण्या इव पादावस्य एणीपदः। अजपदः। प्रोष्ठो गौस्तस्येव पादावस्य प्रोष्ठपदः।

सुप्रात-आदि शब्द बहुव्रीहि समास से अच् प्रत्ययान्त निपातित होते है। यहां 'अव्ययानाम्' से टिलोप है।

## ८६३ नञ् दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ५।४।१२१।

अच् स्यात्। अहलः। अहलिः। असक्थः। असक्थिः। एवं दुःसुभ्याम्। शक्त्योरिति पाठान्तरम्। अशक्तः। अशक्तिः।

बहुव्रीहि समास में नञ् दुस् एवं सुशब्द से पर हलि एवं सक्थि शब्द से अच् प्रत्यय होता है विकल्प से। सूत्र में शक्ति ऐसा भी पाठ है। अशक्तः। अशक्तिः।

## ८६४ नित्यमसिच् प्रजामेधसोः ५।४।१२२।

नञ्दुःसुभ्य इत्येव। अप्रजाः। दुष्प्रजाः। सुप्रजाः। अमेधाः। दुर्मेधाः। सुमेधाः।

नञ्, दुर्, सु से पर प्रजा एवं मेधा को नित्य असिच् प्रत्यय होता है।

## ८६५ धर्मादनिच् केवलात् ५।४।१२४।

केवलात् पूर्वपदात् परो धर्मशब्दस्तदन्ताद् बहुव्रीहेरनिच् स्यात्। कल्याणधर्मा। केवलात् किम्, परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत्। स्व-

शब्दो हीह न केवलं पूर्वपदं किन्तु मध्यमत्वादापेक्षिकम्। संदिग्धसाध्यधर्मेत्यादौ तु कर्मधारयोत्तरपदो बहुव्रीहिः। एवञ्च परमस्वधर्मेत्यपि साध्येव निवृत्तिधर्मो अनुच्छित्तिधर्मेत्यादिवत्। पूर्वपदन्तु बहुव्रीहिणाऽऽक्षिप्यते।

केवल पूर्व पद से पर स्थित धर्म शब्द तदन्त बहुव्रीहि से अनिच् प्रत्यय होता है। जहां दो पद पूर्व में रहे धर्म अन्त में रहे ऐसा बहुव्रीहि में अनिच् नहीं होता है केवल ग्रहण त्रिपद बहुव्रीहि में परम सु स्व सु धर्म सु यहां समास कर अनिच् नहीं होता है। केवल ग्रहण से यहां मध्यमपदापेक्षया आपेक्षिक पूर्वपदत्व परम में है। यदि प्रथम पदद्वय का कर्मधारय समास कर कर्मधारय समास संज्ञक पद का धर्म से बहुव्रीहि समास करने पर वहां कर्मधारय समास संज्ञक एक पूर्वपद है उसके उत्तर धर्म है। वहां अनिच् प्रत्यय होता ही है यथा संदिग्ध साध्य का प्रथम कर्मधारय, वाद में सन्दिग्धसाध्यो धर्मः यस्य यहां अनिच् हुआ, उसी प्रकार परमश्चासौ स्वश्च तदनन्तर परमस्वः धर्मो यस्य यहां समास में अनिच् परमस्वधर्मा। दृष्टान्त प्रदर्शन करते है, वादि एवं प्रतिवादी उभय सम्मत अर्थ को दृष्टान्त कहते है—"वादिप्रतिवादिनोर्यत्र साम्यधीः" तद् दृष्टान्तम्। प्रकृत में न उच्छित्तिः अनुच्छित्तिः अनुच्छित्तिः धर्मः यस्य सः अनुच्छित्तिधर्मा। निवृत्तिधर्मा उसी प्रकार। यहां बहुव्रीहि से पूर्वपद का आक्षेप है।

## ८६६ जम्भा सुहरिततृणसोमेभ्यः ५।४।१२५।

जम्भेति कृतसमासान्तं निपात्यते। जम्भो भक्ष्ये दन्ते च। शोभनो जम्भोऽस्य सुजम्भा। हरितजम्भा। तृणं भक्ष्यं यस्य तृणमिव दन्ता अस्येति वा तृणजम्भा। सोमजम्भा। स्वादिभ्यः किम्, पतितजम्भः।

सु, हरित, तृण, सोम से उत्तर कृतसमासान्त जम्भा शब्द निपातित होता है। जम्भ शब्द का भक्ष्य एवं दन्त अर्थ है, सु = शोभनो जम्भो यस्य स सुजम्भा। अनिच् प्रत्यय है। स्वादि से पर नहीं वहां पतितजम्भः है।

## ८६७ दक्षिणेर्मा लुब्धयोगे ५।४।१२६।

दक्षिणे ईर्मम् = व्रणं यस्य दक्षिणेर्मा मृगः। व्याधेन कृतव्रण इत्यर्थः।

व्याध सम्बन्ध होने पर दक्षिणेर्मा निपातित होता है (अनिच् प्रत्यय होता है) मृगविशेष या व्याधकृत व्रण युक्त।

## ८६८ इच् कर्मव्यतिहारे ५।४।१२७।

कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात् समासान्तः। केशाकेशि। मुसलामुसलि।

कर्मव्यतिहार में जो बहुव्रीहि उसके उत्तर समासान्त इच् प्रत्यय होता है। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तमिति केशाकेशि 'तत्र' से समास पूर्वपद का दीर्घश्च।

## ८६९ द्विदण्ड्यादिभ्यश्च ५।४।१२८।

तादर्थ्ये चतुर्थ्येषा। एषां सिद्ध्यर्थमिच्प्रत्ययः स्यात्। द्वौ दण्डौ यस्मिन् प्रहरणे तद् द्विदण्डि प्रहरणम्। द्विमुसलि। उभाहस्ति। उभयाहस्ति।

इस सूत्र में तादर्थ्य में चतुर्थी है। इस गण में पठित शब्दों की सिद्धि के लिए इच् होता उभाहस्ति में पूर्वपद का दीर्घ एवं उभयाहस्ति में भी समास इच् दीर्घ।

## ८७० प्रसंभ्यां जानुनोर्ज्ञुः ५।४।१२९।

आभ्यां परयोर्जानुशब्दस्य 'ज्ञु:' आदेशः स्याद् बहुव्रीहौ। प्रगते जानुनी यस्य प्रज्ञुः। संज्ञुः।

बहुव्रीहि समास में प्र एवं सम् से पर जानु को ज्ञु आदेश होता है।

## ८७१ ऊर्ध्वाद् विभाषा ५।४।१३०।

ऊर्ध्वज्ञुः। ऊर्ध्वजानुः।

बहुव्रीहि में ऊर्ध्व से उत्तर जानु को ज्ञु आदेश विकल्प से होता है। ऊर्ध्वे जानुनी यस्य ऊर्ध्वज्ञुः। पक्ष में ऊर्ध्वजानुः।

## ८७२ धनुषश्च ५।४।१३२।

धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात्। शार्ङ्गधन्वा।

धनुरन्त बहुव्रीहि को अनङ् आदेश होता है। शार्ङ्गं धनुः यस्य सः शार्ङ्गधन्वा।

## ८७३ वा संज्ञायाम् ५।४।१३३।

शतधन्वा। शतधनुः।

संज्ञा में धनुष् को अनङादेश विकल्प से होता है। शतं धनूंषि यस्य स शतधन्वा, शतधनुः।

## ८७४ जाया या निङ् ५।४।१३४।

जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्।

जाया शब्द है अन्त में जिसको ऐसे बहुव्रीहि को निङादेश होता है। अलोऽन्त्यस्य से अन्त आकारको यह होगा।

## ८७५ लोपो व्योर्वलि ६।१।६६।

यकारवकारयोर्लोपः स्याद् वलि। पुंवद्भावः। युवति जायाऽस्य युवजानिः।

वल् पर रहते यकार एवं वकार का लोप होता है। पुंवद्भाव भी होता है स्त्रियाः पुंवत् सूत्र से। 'यूनस्तिः' से तिप्रत्यय स्त्रीलिङ्ग होकर युवतिः। युवतिः जाया=पत्नी यस्य सः में निङ् आदेश एवं यकार लोप युवजानिः। कोई यहां 'जाया' को लुप्तषष्ठ्यन्त मानकर उसके 'या' को निङ् आदेश करता है तब यहां यलोपकी आवश्यकता नहीं है, पुंवद्भाव से युवति का युवन् उसका नकार लोप। जायायाः या इति जायाया = 'या' को ही निङ् हुआ।

## ८७६ गन्धस्येदुत्पूतिसुसुरभिभ्यः ५।४।१३५।

एभ्यो गन्धस्येकारोऽन्तादेशः स्यात्। उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। ❀ गन्धस्येत्त्वे तदेकान्तग्रहणम् ❀। एकान्तः=एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः। सुगन्धि पुष्पं सलिलं च। सुगन्धि वायुः। नेह—शोभना गन्धाः = द्रव्याण्यस्य सुगन्ध आपणिकः।

उत् , पूति , सु, सुरभि इनसे पर गन्ध शब्द को समासान्त इकारादेश होता है। गन्ध शब्द को इत्व विधान में एकदेश के समान अविभाग से लक्ष्यमाण रहते। दूकानके एक कोने में गन्धक नामकद्रव्य रक्खा है वहां सुगन्धः ही होगा, इत्व नहीं।

## ८७७ अल्पाख्यायाम् ५।४।१३६।

सूपस्य गन्धः=लेशो यस्मिन् तत् सूपगन्धि भोजनम् । घृतगन्धि । गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः ।

अल्पार्थ बोधन में गन्धशब्दान्त बहुव्रीहि को इकार समासान्त होता है। अनेकार्थक गन्ध शब्द विश्वकोशकारके कथन से है। गन्धक, आमोद, लेश, सम्बन्ध एवं गर्व।

## ८७८ उपमानाच्च ५।४।१३७।

पद्मस्येव गन्धोऽस्य पद्मगन्धिः ।

उपमानवाचक गन्धशब्दान्त बहुव्रीहि से इकारादेश समासान्त होता है। यहां उदाहरण में कमलार्थ पद्म शब्द सदृशार्थक है। व्यधिकरण बहुव्रीहि का यह उदाहरण है।

## ८७९ पादस्य लोपोऽहस्त्यादिभ्यः ५।४।१३८।

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद् बहुव्रीहौ। स्थानिद्वारेणायं समासान्तः। व्याघ्रस्येव पादौ अस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम् , हस्तिपादः । कुसुलपादः ।

बहुव्रीहि समास में हस्त्यादि भिन्न उपमावाचक शब्द से पर स्थित पाद का अन्त्य वर्ण का लोप होता है, यद्यपि लोप अभावस्वरूप या शून्यस्वरूप है वह किसी का अवयव नहीं हो सकता है। उसका समासान्ताधिकार में पाठ अनुपयुक्त है तो भी यहां आदेशरूप लोप में पाद का अकार में समासावयवत्व या उसका आदेश लोप में आरोप कर लोप को भी समासान्त मानना चाहिये। व्यधिकरण बहुव्रीहि में व्याघ्रपात्। हस्त्यादि उपमान रहने पर लोपाभाव है। यथा—हस्तिपादः।

## ८८० कुम्भपदीषु च ५।४।१३९।

कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् । पादः पत् । कुम्भपदी । स्त्रियां किम् , कुम्भपादः ।

स्त्रीलिङ्ग में कुम्भपदी इत्यादि में पाद शब्द का अकार का लोप होता है एवं ङीप् भी। पादशब्द की जहां भसंज्ञा वहां पत् आदेश होता है 'पादः पत्' सूत्र से। कुम्भस्य ( इव ) पादौ यस्याः सा कुम्भपदी। पुरुष में कुम्भपादः।

## ८८१ संख्यासुपूर्वस्य ५।४।१४०।

पादस्य लोपः स्यात् समासान्तो बहुव्रीहौ । द्विपात् सुपात् ।

संख्या वाचक शब्द पूर्व में या सु पूर्व में रहते पाद के अन्त्य का लोप होता है। द्वौ पादौ यस्य स द्विपात्। शोभनौ पादौ यस्य सुपात्।

## ८८२ वयसि दन्तस्य दतृ ५।४।१४१।

संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद् वयसि। द्विदन्। चतुर्दन्। षट् दन्ता अस्य षोडन्। सुदन्, सुदती। वयसि किम्?, द्विदन्तः करी। सुदन्तो नटः।

वयः = अवस्था गम्यमान रहे वहां दन्त को दतृ आदेश बहुव्रीहि में होता है। पशुओं में दांत दिख कर वय का निर्णय होता है। द्विदन् वृषभः। द्वौ दन्तौ यस्य स द्विदन् दतृ में ऋकार की इत्संज्ञा से उगित् मानकर स्त्रीलिङ्ग में उगितश्च से ङीप् यथा सुदती। हाथी आजीवन दो दांतों से युक्त है यहां अवस्था गम्यमान नहीं, अतः दन्त को दतृ न हुआ।

## ८८३ स्त्रियां संज्ञायाम् ५।४।१४३।

दन्तस्य दतृ स्यात् समासान्तो बहुव्रीहौ। अयोदती। फालदती। संज्ञायां किम्, समदन्ती।

संज्ञा में दन्त को दतृ आदेश बहुव्रीहि में होता है। अयोदती फालदती संज्ञा है। समान दांत वाली में समदन्ती। नासिकोदर से ङीष्।

## ८८४ विभाषा श्यावारोकाभ्याम् ५।४।१४४।

दन्तस्य दतृ स्याद् बहुव्रीहौ। श्यावदन्। श्यावदन्तः। अरोकदन्। अरोकदन्तः।

कपिश वर्ण को श्याव कहते है। छिद्र रहित को अरोक कहते है। बहुव्रीहि में श्याव एवं अरोक के बाद का दन्त को दतृ आदेश होता है विकल्प से।

## ८८५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ५।४।१४५।

एभ्यो दन्तस्य दतृ वा। कुड्मलाग्रदन्। कुड्मलाग्रदन्तः।

अग्रान्त, शुद्ध, शुभ्र, वृष एवं वराह से पर दन्त को विकल्प दतृ आदेश हो... है पुष्प की कलियों के अग्रभाग समान दांत वाला अर्थ में कुड्मलाग्रदन्।

## ८८६ ककुदस्यावस्थायां लोपः ५।४।१४६।

अजातककुत्। पूर्णककुत्।

अवस्था गम्यगान होने पर ककुद शब्द के अन्त्य अल् का लोप होता। बाल्यावस्था यहां अजातं ककुदं यस्य अजातककुद से गम्यमान है। युवावस्था पूर्णककुद् से गम्यमान है।

## ८८७ त्रिककुत्पर्वते ५।४।१४७।

त्रीणि ककुदानि अस्य त्रिककुत्। संज्ञैषा पर्वतविशेषस्य। त्रिककुदोऽन्यः।

पर्वत विशेष की संज्ञा में त्रिशब्दोत्तर ककुद का अन्त्य अकार का लोप होता है।

## ८८८ उद्विभ्यां काकुदस्य ५।४।१४८।

लोपः स्यात्। उत्काकुत् विकाकुत्। काकुदम् = तालु।

बहुव्रीहि में उत् एवं वि से पर काकुद का अन्त्यलोप होता है। मुखावयवस्थानविशेष को यहां काकुद तालु को कहता है।

## ८८९ पूर्णाद् विभाषा ५।४।१४९।

पूर्णकाकुद् । पूर्णकाकुदः ।

पूर्ण शब्द से पर काकुद का अन्त्य लोप होता है।

### ८९० सुहृद्दुर्हृदौ मित्रामित्रयोः ५।४।१५०।

सुदुर्भ्याम् हृदयस्य हृद्भावो निपात्यते । सुहृन्=मित्रम् । दुर्हृद्=अमित्रः। अन्यत्र सुहृदयः । दुर्हृदयः ।

मित्र अर्थ में सु से उत्तर हृदय शब्द को हृद् आदेश होता है। एवं अमित्र=शत्रु अर्थ में दुर् के उत्तर हृदय को हृद् आदेश होता है। जहां मित्रता या शत्रुता नहीं उस उदासीन में 'सुहृदयः' यही होता है। एवं दुर्हृदयः।

### ८९१ उरः प्रभृतिभ्यः कप् ५।४।१५१।

व्यूढोरस्कः । प्रियसर्पिष्कः । इह पुमान् , अनड्वान् , पयः नौः, लक्ष्मीरिति एकवचनान्तानि पठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु शेषाद् विभाषेति विकल्पेन कप् । द्विपुमान् द्विपुंस्कः । ॐअर्थान्नञःॐ अनर्थकम् । नञः किम् । अपार्थम् । अपार्थकम् ।

बहुव्रीहि समास में उरः प्रभृति शब्दों से कप् प्रत्यय विकल्प से होता है। व्यूढम्=विपुलम् उरः=वक्षस्तलम् यस्य असौ व्यूढोरस्कः। प्रियं सर्पिः यस्य प्रियसर्पिष्कः। इस गण में एकवचनान्त जो शब्द पठित हैं उन्हीं को नित्य कप् इससे। अर्थात् द्विवचनादि में विकल्प कप्। नञ्पूर्वक जो अर्थ तदन्त बहुव्रीहि से कप् होता है। अनर्थकम्। अपगतः अर्थः यस्मिन् तत् अपार्थकम्, यह नञ् नहीं अतः कप् न हुवा। न विद्यते अर्थो यस्मिन् वाक्ये तत् अनर्थकम् वाक्यम् यहां इस से कप् हुआ है।

### ८९२ इनः स्त्रियाम् ५।४।१५२।

बहुदण्डिका नगरी । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेनापि तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका । स्त्रियां किम् ? बहुदण्डी । बहुदण्डिको ग्रामः ।

इन् प्रत्ययान्त से स्त्रीलिङ्ग में कप् प्रत्यय होता है। बहवो दण्डिनो वर्तन्ते यस्यां नगर्यां सा नगरी बहुदण्डिका। अर्थवान् या अनर्थक अन् इन् अस् मन् रहे वहां तदन्तविधि द्वारा अन्नन्त इनन्त असन्त मनन्त का ग्रहण करना चाहिए। अर्थात् 'अर्थवद्ग्रहणे नानर्थकस्य' परिभाषा यहां अनित्यत्व के कारण नहीं प्रवृत्त होती। अनित्य में प्रमाण 'इणः षीध्वम्' सूत्र में अङ्ग्रहण है। प्रत्यय अर्थवान् उसका अंश=अवयव अनर्थक है। यथा वाच् से ग्मिनि प्रत्यय का इन् निरर्थक है। सुन्दर प्रवचन अधिक करने वाले पुरुष युक्ता नगरी बहुवाग्मिका। पुंलिङ्ग में यथा बहवो दण्डिनो यस्मिन् ग्रामे बहुदण्डी यहाँ कप् नित्य न हुआ, विकल्प से हुआ है।

### ८९३ शेषाद् विभाषा ५।४।१५४ ।

अनुक्तसमासान्ताच्छेषाधिकारस्थाद् बहुव्रीहेर्वा कप् स्यात्। महायशस्कः। महायशाः । अनुक्तेत्यादि किम् , व्याघ्रपात् । सुगन्धिः । प्रियपथः । शेषाधिकारस्थात् किम् , उपबहवः । उत्तरपूर्वा । सुपुत्रः । तन्त्रादिना शेषशब्दोऽर्थद्वयपरः ।

जहाँ समासान्त न कहा गया हो एवं शेषाधिकार में विद्यमान रहे वहाँ बहुव्रीहि के उत्तर कप् प्रत्यय समासान्त विकल्प से होता है। यथा महत् यशो यस्य सः महायशस्कः। महायशाः। व्याघ्रपात् में लोपरूप समासान्त उक्त है। सुगन्धि में इकारादेशरूप समासान्तविहित है। प्रियपथः में 'ऋक्पूः' से अप् प्रत्ययविहित है। इन सब में अनुक्त नहीं अतः विकल्प से इससे कप् न हुआ। 'उपबहवः, में 'संख्ययाऽव्यया' से समास है। वह शेषाधिकारस्थ नहीं है। उत्तरपूर्वा में दिङ्नामान्यतराले समास है। सुपुत्र में 'तेन सह' से समास है। शेषो बहुव्रीहि शेष का अधिकार 'संख्यया' आदि में नहीं है। शेष का अनेकमन्यपदार्थे में ही सम्बन्ध है। अन्यत्र उसकी निवृत्ति है। यहां अनुक्त एवं शेषाधिकार दो अर्थ तन्त्र या आवृत्ति से है। सकृदुच्चरितन्याय से एक शब्द से एक ही अर्थ का एक काल में बाध होता है अतः यहाँ आवृत्ति का आश्रयण करना वस्तुतः अनुक्तार्थक शेष की आवश्यकता यहाँ नहीं है तत् तत् समासान्त अपने अपने विषय में कप् का बाध करेंगे अतः अवशिष्ट में ही यह कप् होगा, शेष की आवृत्ति के बीना ही यह शेष शब्द शेषाधिकार परक होगा।

## ८९४ आपोऽन्यतरस्याम् ३।४।१५।

क्प्याबन्तस्य ह्रस्वो वा स्यात्। बहुमालकः। बहुमालाकः। कवभावे बहुमालः।

कप् प्रत्यय पर रहते आबन्त का ह्रस्व विकल्प से होता है। ह्रस्व एवं कप् पक्ष में बहुमालाकः। ह्रस्वाभाव में बहुमालकः। कप् के अभाव में बहुमालः। दो विकल्प में तीन रूप हैं।

## ८९५ न संज्ञायाम् ५।४।१५५।

शेषादिति प्राप्तः कप् न स्यात् संज्ञायाम्। विश्वे देवा अस्य विश्वेदेवः।

संज्ञा में 'शेषात्' से प्राप्त कप् नहीं होता है। समास में एकार निपातन है।

## ८९६ ईयसश्च ५।४।१५६।

ईयसन्तोत्तरपदात् न कप्। बह्वः श्रेयांसोऽस्य बहुश्रेयान्। गोः स्त्रियोरिति ह्रस्वत्वे प्राप्ते *ईयसो बहुव्रीहेर्नेति वाच्यम्*। बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी। बहुव्रीहेः किम्, अतिश्रेयसिः।

ईयसन्तोत्तरपदक बहुव्रीहि से कप् नहीं होता है। अर्थात् ईयस् है उत्तर पद में जिसको ऐसा उत्तर पद युक्त बहुव्रीहि से कप् नहीं होता है। प्रशस्य से ईयसुन् प्रशस्य को श्र आदेश प्रकृतिभाव, गुण से श्रेयस् के बहुवचन में स्त्रीलिङ्ग में श्रेयस्यः। ईयसुन् उगित् है स्त्रीलिङ्ग में ङीप्। बहुश्रेयसी में 'गोस्त्रियोः' सूत्र से ह्रस्व प्राप्त था किन्तु* ईयसन्त बहुव्रीहि में ह्रस्व नहीं होता है। बहुश्रेयसी। श्रेयसीम् अतिक्रान्ता या स्त्री द्वितीया तत्पुरुष में ह्रस्व होता है। यथा—अतिश्रेयसिः।

## ८९७ वन्दिते भ्रातुः ५।४।१५७।

पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान् कप् न स्यात्। प्रशस्तो भ्राता यस्य प्रशस्तभ्राता। न पूजनादिति निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोः' प्रागेव वक्ष्यते। वन्दिते किम् ?, मूर्खभ्रातृकः।

पूजित अर्थ में जो भ्रातृ शब्द वह है उत्तरपद में जिसको ऐसे बहुव्रीहि से कप् प्रत्यय नहीं होता है। प्रशस्तभ्राता यहां कप् न हुआ। मूर्खभ्रातृकः यहां कप् हुआ।

## ८९८ नाडीतन्त्र्योः स्वाङ्गे २।४।१५९।

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात् कप् न स्यात्। बहुनाडिः कायः। बहुतन्त्री ग्रीवा। तन्त्री=धमनी। स्त्रीप्रत्ययान्तत्वाभावाद् ह्रस्वो न। स्वाङ्गे किम् ?, बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा।

स्वाङ्ग वाचक नाडी एवं तन्त्री वे है उत्तरपद में जिसको ऐसे बहुव्रीहि से कप् प्रत्यय समासान्त नहीं होता से। बहुनाडिः में 'गोः स्त्रियोः' से उपसर्जन ह्रस्व है। तन्त्री में ईप्रत्यय 'स्त्रियाम्' के अधिकार में विहित नहीं है। अतः ह्रस्व न हुआ, स्वाङ्गवाचक न होने से कप् होता है, यथा—स्तम्भ एवं वीणा अर्थ में।

## ८९९ निष्प्रवाणिश्च २।२।१६०।

कबभावोऽत्र निपात्यते। प्रपूर्वाद् वयतेर्ल्युट्। प्रवाणी = तन्तुवायशलाका। निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः। समाप्रवान्=नव इत्यर्थः।

निष्प्रवाणि में कप् का अभाव निपातन से होता है। प्रपूर्व वेञ् तन्तुसन्ताने से ल्युट् प्रत्ययान्त प्रवाणी है। जुलाहा की बीननेकी शलाका को प्रवाणी कहते है। नवीन पट को निष्प्रवाणि कहते है यहां उपसर्जन ह्रस्व है,

## ९०० सप्तमी विशेषणे बहुव्रीहौ २।२।३५।

सप्तम्यन्तं विशेषणं बहुव्रीहौ पूर्वं प्रयोज्यम्। कण्ठेकालः। अत एव ज्ञापनाद् व्यधिकरणपदो बहुव्रीहिः। चित्रगुः ❀सर्वनामसंख्ययोरुपसंख्यानम❀ सर्वश्वेतः। द्विशुक्लः ।❀मिथोऽनयोः समासे संख्यापूर्वम्, शब्दपरविप्रतिषेधात्❀ द्व्यन्यः। ❀संख्याया अल्पीयस्याः❀। द्वित्राः। द्वन्द्वेऽपि द्वादश। ❀वा प्रियस्य❀प्रियगुडः। गुडप्रियः।❀गड्वादेः परा सप्तमी❀। गडुकण्ठः।❀क्वचिन्न। वहेगडुः।

बहुव्रीहि समास में सप्तम्यन्त पद एवं विशेषण वाचक पद का पूर्वनिपात करना चाहिये। यथा कण्ठे कालः = सदाशिव भगवान् शङ्कर आशुतोष है। समुद्रमथन से उत्पन्न हालाहल विष का पान करने से गले में नीलमा हो गई इस लिए उनका नाम शितिकण्ठ, नीलकण्ठ हुआ है। इस सूत्रारम्भ से ज्ञापन होता है कि अप्रथमान्त का भी व्यधिकरण बहुव्रीहि होता है। यथा कण्ठे सप्तम्यन्त का प्रथमान्त काल का यहां समास कर 'हलदन्तात्' से सप्तमी का अलुक् हुआ है। चित्राः गावो अस्य 'चित्रगुः' 'गोःस्त्रियोः' से ह्रस्व हुआ है। सर्वनाम एवं संख्या का भी पूर्वनिपात होता है। सर्वश्वेतः। द्विशुक्लः। सर्वनाम एवं संख्यावाचक के समास में शब्दकृत परत्व के कारण संख्यावाचक का ही पूर्वनिपात होता है। सूत्रकृत परत्व के कारण विप्रतिषेधे' जैसे लगता है वैसा ही क्वचित् शब्द कृतपरत्व को लेकर भी परशब्द को बलवत्ता बोधन होती है। यथा द्व्यन्यः। दोनों संख्यावाचक समासान्तर्गत रहें वहां अतिशय अल्पत्व संख्यावाचक का ही पूर्वनिपात होता है। यथा द्वौ च त्रयश्च इति द्वित्राः, यहां सुजर्थ में बहुव्रीहि है, बहुव्रीहि से सुजर्थ उक्त है, अतः सुच न हुआ, द्वन्द्व में भी अल्पत्व बोधक संख्यावाचक का पूर्वनिपात होता है, यथा द्वादश। प्रिय में

विकल्प करके पूर्वनिपात बहुव्रीहि में होता है। प्रियगुडः। गुडप्रियः। गडुः कण्ठे यस्य यहां गडु आदि में सप्तम्यन्त का परनिपात होता है। गडुकण्ठः। क्वचित् नहीं भी होता है—वहेगुडुः।

## ९०१ निष्ठा २।२।३६।

**निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। कृतकृत्यः। *जातिकालसुखादिभ्यः परा निष्ठा वाच्या*। सारङ्गजग्धी। मासजाता। सुखजाता। प्रायिकं चेदम्। कृतकटः। पीतोदकः।**

बहुव्रीहि समास में निष्ठा प्रत्ययान्त पद का पूर्वनिपात होता है। कृतं कृत्यं येन इति कृतकृत्यः। *जाति वाचक, कालवाचक एवं सुख आदि शब्द जहाँ समास घटक रहे वहां निष्ठा प्रत्ययान्त पद का परनिपात होता है। यथा जग्धः सारङ्गः यया सारङ्गजग्धी।

मासजाता। सुखजाता। क्वचित् यह वार्तिक नहीं लगता है। कृतः कटः येन स यहां निष्ठान्तपद का ही पूर्वनिपात हुआ है, आहिताग्नित्व की कल्पना से। सकर्मक कृधातु से कर्म की अविवक्षा कर भाव में क्तिन् ततः अर्श आदिभ्यः से अच्प्रत्यय है, करणम् कृतिः सा अस्ति अस्य इति कृतः। पीतम् उदकम् येन सः। यहां पानम् पीतिः सा अस्य अर्थ में पा धातु से भावार्थक क्तिन् कर अर्श आदिभ्यः से अच् प्रत्यय है। पान क्रिया युक्त अर्थ हुआ। अन्यथा पा धातु सकर्मक है कर्म में क्तप्रत्यय से उदक कर्म उक्त है एवं पीतपदार्थ उदकार्थ में सापेक्ष है सापेक्ष स्थल में सामर्थ्य नहीं। समासाभाव होगा। पीतोदकः।

## ९०२ वाहिताग्न्यादिषु २।२।३७।

**आहिताग्निः। अग्न्याहितः। आकृतिगणोऽयम्। *प्रहरादिभ्यः परे निष्ठासप्तम्यौ*। अस्युद्यतः। दण्डपाणिः। क्वचिन्न विवृतासिः।**

### इति बहुव्रीहिः।

आहिताग्नि आदि में विकल्प से पूर्व निपात होता है। यह आकृति गण है। *प्रहरणार्थक के उत्तर निष्ठान्त एवं सप्तम्यन्त का प्रयोग होता है। यथा उद्यता असिः येन उद्यतासिः। अस्युद्यतः। दण्डः पाणौ यस्य दण्डपाणिः। क्वचित् नहीं भी होता है। विवृतासिः।

पं० श्रीबा० कृ० पञ्चोलिकृतरत्नप्रभामें बहुव्रीहि प्रकरण समाप्त



# अथ द्वन्द्वसमासप्रकरणम् ॥ १८ ॥

## ९०३ चार्थे द्वन्द्वः २।२।२९।

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः समुच्चयः। अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः। मिलितानामन्वय इतरेतरयोगः। समूहः=समाहारः। तत्र ईश्वरञ्च गुरुञ्च भजस्वेति समुच्चये, भिक्षामट गाञ्चानयेत्यन्वाचये च न समासोऽसामर्थ्यात्। धवखदिरौ। संज्ञापरिभाषम्। अनेकोक्तेर्होतृपोतृनेष्टोद्गातारः। द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानिष्टोद्गातारः।

चार्थ में विद्यमान अनेक सुबन्त का समास होता है। एवं इस समाससंज्ञक की द्वन्द्व संज्ञा भी होती है। चार्थ चार है—१-समुच्चय, २-अन्वाचय, ३-इतरेतरयोग, ४-समाहार। १ परस्पर-अपेक्षा न रखने वाले पदों के अर्थों का एक में सम्बन्ध को समुच्चय कहते हैं। दो पदार्थों में एक का प्राधान्य अन्य का अप्राधान्य को अन्वाचय कहते हैं। मुख्यप्रवृत्तिम् उद्दिश्य प्रवृत्तस्य पुरुषस्य अन्यार्थलाभः=अन्वाचयः। एकार्थीभाव रूप सामर्थ्य के अभाव से समुच्चय एवं अन्वाचय में समास नहीं होता है। परस्परमिलित पदार्थ बोधक को इतरेतरयोग कहते हैं। अनेक पदार्थों का समुदाय को समाहार कहते हैं।

यथा ईश्वर एवं गुरु की सेवा करो यहां ईश्वरार्थ एवं गुरु का अर्थ दोनों अर्थों का परस्पर सम्बन्ध नहीं है किन्तु इन दोनों अर्थों का साक्षात् भजन क्रिया में ही सम्बन्ध है, यथा ईश्वरं च गुरुं च भजस्व यहां समुच्चय में सामर्थ्य नहीं, समास न हुआ, वाक्य ही रहा। प्रवृत्ति का मुख्य उद्देश भिक्षा है, यदि मिले तो गाय को भी लेते आना यहां गाय का आनयन अप्रधान है, यथा भिक्षाम् अट, गाञ्चानय। यहां भी समासाभाव असामर्थ्य से है। इतरेतरयोग का उदाहरण—धवश्च खदिरश्च धवखदिरौ यहां समुदित धवखदिर का छेदनादि क्रिया में कर्मत्व सम्बन्ध से अन्वय है, सहविवक्षा है, द्वन्द्व हुआ। पृथक् ज्ञात पदार्थों का परस्पर अन्वय को सहविवक्षा कहते हैं, सह विवक्षा साहित्य रूप है। साहित्य उसको कहते हैं कि—एक धर्म युक्त काएक सम्बन्ध से एक पदार्थ में अन्वय को। यथा प्रकृत में धवखदिर समुदाय का कर्मत्व रूप एक सम्बन्ध से छेदन रूप अध्याहृत एक क्रिया में अन्वय है। संस्कृत में यह स्वरूप है—"एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसम्बन्धेन एकधर्मावच्छिन्नेऽन्वयः=सामर्थ्यम्। सहविवक्षा पदार्थ=पृथक्ज्ञातयोः पदार्थयोः परस्परम् अन्वयः। इतर शब्द अन्यार्थक है, दूसरे इतर का भी अन्यार्थ है। योग का अर्थ है सम्बन्धः मिलकर अर्थ परस्पर सम्बन्ध वाच्यार्थ है, इतरेतर योग द्वन्द्व में अवयव गत संख्या द्वित्व एवं बहुत्वादि उद्भूत होती है तदर्थक संख्या वाचक विभक्ति द्वन्द्व समासोत्तर आती है।

यथा धवगत एकत्व खदिरगत एकत्व यह दोनों एकत्व मिलकर द्वित्व संख्या के उत्पादक हुए, अतः धवखदिर का द्वन्द्व के बाद औ विभक्ति द्वित्वार्थक आई है। समाहार द्वन्द्व का

उदाहरण — यथा संज्ञा च परिभाषा च एतयोः समाहारः = समूह इति संज्ञापरिभाषम्। समाहार द्वन्द्व में समस्यमान पदार्थगत संख्या तिरोहित होती है। एवं उन वस्तुओं का समुदाय उस समुदाय एक होने से एक वचन ही आता है यहां अनुद्भूतावयवार्थगत संख्या है। एवं समाहार द्वन्द्व में 'स नपुंसकम्' से नपुंसत्व रहता है। यथा संज्ञापरिभाषा का समुदाय = संज्ञापरिभाषम्। कुछ विशेष बाधक स्थलोंको छोड़कर सर्वत्र इतरेतर योग विवक्षा, या समाहार द्वन्द्व विवक्षा, या उभय विवक्षा होती है। अपवाद इतरेतर योग के पश्चात् बताये जायेंगे।

चार्थे द्वन्द्वः में 'अनेकम्' की अनुवृत्ति में दो सुबन्त तीन सुबन्त या इससे भी अधिक सम्बन्धों का द्वन्द्व होता है, यथा होता च पोता च नेष्टा च उद्गाता च इति यहां इतरेतरयोग द्वन्द्व से होतृपोतृनेष्टोद्गातारः। यहां उद्गातृ उत्तर पद से पूर्व नेष्टृ को 'आनङ् ऋतो द्वन्द्वे' से आनङ् आदेश ऋकार को होकर नकार का लोप हुआ है 'नेष्टोद्गातारः' में। आनङ् ऋतो द्वन्द्वे में पूर्वपद यौगिकार्थ मात्र बोधक है रूढ नहीं है। एवं यहां उत्तरपद से पूर्वपद संकेतितार्थ का आक्षेप भी नहीं है। केवल पूर्वपद = पूर्वश्च तत् पदश्च ऐसा चाहिये। इस परिस्थिति में पूर्वोक्त चार में दो दो का द्वन्द्व करने पर पूर्व तीन पदों के ऋकार का आनङ् आदेश होता ही है यथा होता च पोता च इति यहां द्वन्द्व समास विभक्तिका लुक् होतृ के ऋकार को आनङ् ( आन् ) हुआ है—

होतापोतारौ, एवं नेष्टा च उद्गाता च यहां भी द्वन्द्व समास करके विभक्ति लुक् से नेष्टृ उद्-गातृ औ पूर्व ऋकार को आन् नलोप नेष्टोद्गातारौ, पुनः द्वन्द्व होतापोतारौ च नेष्टोद्गातारौ च होतापोतानेष्टोद्गातारः। यहां अवयवार्थगत बहुत्व संख्या उद्भूत होने से इतरेतरयोग द्वन्द्व के बाद समुदार्थ बोधक बहुवचन विभक्ति उत्पन्न हुई है।

## ९०४ राजदन्तादिषु परम् २।२।३१।

**एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा इति राजदन्तः। ॐधर्मादिष्व-नियमः ॐअर्थधर्मौ। धर्मार्थौ। दम्पती। जम्पतिः। जायापतिः। जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते। आकृतिगणोऽयम्।**

राजदन्तादि शब्दों में जो शब्द पूर्वप्रयोग के योग्य हो उसका परनिपात होता है। यथा षष्ठीतत्पुरुष में षष्ठयन्त की उपसर्जन संज्ञा होकर पूर्वनिपात प्राप्त का इसने परनिपात किया दन्तानां राजा इति राजदन्तः। धर्मादि शब्द विषय में पूर्वनिपात या परनिपात का कोई नियम नही है। यथा—अर्थश्च धर्मश्चेति अर्थधर्मौ, धर्मार्थौ। जाया च पतिश्च यहाँ द्वन्द्व कर जाया के स्थान में जम् आदेश विकल्प से होता है जहाँ वे नहीं होंगे वहाँ जाया रहता है यथा दम्पती। जम्पती। जायापतिः। राजदन्तादि आकृतिगण है।

## ९०५ द्वन्द्वे घि २।२।३२।

**द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ। ॐ अनेकप्राप्तौ एकत्र नियमोऽनियमश्च शेषे ॐ। हरिगुरुहराः। हरिहरगुरवः।**

द्वन्द्व समास में घिसंज्ञक का पूर्वनिपात होता है। हरिशब्दघिसंज्ञक है। जहाँ अनेक का पूर्वनिपात प्राप्त रहे वहाँ एक में नियम अन्यत्र यथेच्छ प्रयोग होता है। हरि एवं गुरु दोनों घि संज्ञक है, वहां जब हरिका पूर्व निपात तब गुरु का नहीं। जब गुरु का तो हरि का नही, पूर्व निपातित पद को छोड़कर बाकी में यथेच्छ प्रयोग यथा—हरिगुरुहराः। हरिहरगुरवः। यह-गुरु हरमें अनियम है।

## ९०६ अजाद्यदन्तम् २।२।३३।

**इदं द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ। बहुष्वनियमः। अश्वरथेन्द्राः। इन्द्राश्वरथाः। ॐ घ्यन्तादजाद्यन्तं विप्रतिषेधेनॐ। इन्द्राग्नी।**

द्वन्द्व समास में अजादिरूप अदन्त का पूर्वनिपात होता है। ईशकृष्णौ। अनेक अजादिरूप अदन्त का युगपत् द्वन्द्वसमास में यह नियम नहीं है। यथा अश्वरथेन्द्राः। इन्द्राश्वरथाः। जिस स्थल में घि संज्ञक रहे एवं अजादिरूप अदन्त रहे वहाँ 'विप्रतिषेधे परं कार्यम्' से अजाद्यन्तम् से परत्व के कारण अजादि रूप अदन्त का ही पूर्व निपात होता है' यथा इन्द्रश्च अग्निश्च इन्द्राग्नी।

## ९०७ अल्पाच्तरम् २।२।३४।

**शिवकेशवौ। ॐऋतुनक्षत्राणां समानाक्षराणामानुपूर्व्येणॐ। हेमन्तशिशिरवसन्ताः। कृत्तिकारोहिण्यौ। समानाक्षराणां किम्? ग्रीष्मवसन्तौ। ॐलघ्वक्षरं पूर्वम्ॐ। कुशकाशम्। अभ्यर्हितञ्चॐ। तापसपर्वतौ। ॐवर्णानामानुपूर्व्येणॐ। ब्राह्मणक्षत्रियविट्शूद्राः। ॐभ्रातुर्ज्यायसःॐ। युधिष्ठिरार्जुनौ।**

द्वन्द्व समास में अल्प अच् युक्त का पूर्वनिपात होता है। शिवश्च केशवश्च शिवकेशवौ। समानाक्षर युक्त जो ऋतुवाचकशब्द एवं नक्षत्र वाचक शब्द उनका उद्भवक्रमानुसार पूर्वनिपात होता है। अर्थात् ऋतुओं में प्रादुर्भाव क्रम एवं नक्षत्रों मे उदयकृतक्रम पूर्वनिपात में कारण है। प्रथम हेमन्त द्वितीय शिशिर तृतीय वसन्त इसका द्वन्द्व में 'हेमन्तशिशिरवसन्ताः' हुआ है। कृत्तिका के बाद रोहिणी का उदय होता है कृत्तिकारोहिण्यौ। समान अक्षर = अच् नहीं वहां इस नियम नहीं है। वहां अल्पाच् का ही पूर्वनिपात होता है। यथा ग्रीष्मवसन्तौ। यहां वसन्त का प्रादुर्भाव पूर्व में होते हुए तीन अच् युक्त है, अतः परनिपात ग्रीष्मापेक्षया हुआ है। द्वन्द्व में लघुअक्षरयुक्त का पूर्वनिपात होता है कुश का काश की अपेक्षा पूर्वप्रयोग से कुशकाशम्। द्वन्द्व में पूज्य का पूर्वनिपात है। यथा तापसपर्वतौ। यहां पर्वत लघु अक्षर युक्त है किन्तु पूज्य नहीं अतः परनिपात इसका हुआ है। चारवर्ण है उनमें उत्पत्ति क्रम से पूर्वनिपात होता है। यहां वर्णपद से ब्राह्मणादि का ग्रहण होता है। यथा ब्राह्मणक्षत्रियविट्शूद्राः। द्वन्द्व में भ्राताओं के मध्य में ज्येष्ठ का पूर्वनिपात होता है। युधिष्ठिरार्जुनौ। युधि तिष्ठतीति युधिष्ठिरः, यहां सप्तमी समास एवं सप्तमी का अलुक् एवं स्थिर का सकार का षकार एवं ष्टुत्व है, 'हलदन्तात्' से अलुक्। गवियुधिभ्यां स्थिरः से षत्व है।

## ९०८ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२।

**एषां द्वन्द्व एकवत् स्यात। पाणिपादम्। मार्दङ्गिकवैणविकम्। रथिकाश्वारोहम्। समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणम्। प्राण्यङ्गादीनां समाहार एव यथा स्यात्।**

सूत्र में द्वन्द्वसमास का अन्त में अङ्ग का प्रत्येक के साथ सम्बन्ध है। अन्त का अर्थ समीप है। द्वन्द्व समास में प्राणी के अङ्गवाचक का तूर्याङ्ग का एवं सेनाङ्ग का एकवद् भाव अर्थात् एक वचन ही होता है यथा पाणी दो है पाद दो है मिलकर बहुवचन प्राप्त था एकवचन से पाणिपादम् ही हुआ। मृदङ्ग बजाने का शिल्पयुक्त एवं वेणुनिर्मित वंशी के बजानेवाला अर्थ में मार्दङ्गिकश्च वैणविकश्च मार्दङ्गिकवैणविकम्। रथ से भ्रमण करनेवाला एवं अश्वारोही इनके वाचक का द्वन्द्व

रथिकाश्वारोहम्। समाहार द्वन्द्व से समूह एक होने से एकवचन सिद्ध ही था यह सूत्र नियमार्थ है—प्राण्यङ्ग तूर्य के अङ्ग एवं सेनाङ्ग का समाहार द्वन्द्व ही होता है। ऐच्छिक इतरेतरयोग द्वन्द्व जो प्राप्त था वह इनका कथमपि नहीं होता है। समाहार में नपुंसकत्व एकवचनत्व ही रहता सदा है।

## ९०९ अनुवादे चरणानाम् २।४।३।

**चरणानां द्वन्द्व एकवत् स्यात् सिद्धस्योपन्यासे। ❀स्थेणोर्लुङिति वक्तव्यम्❀। उदगात् कठकलापम्। प्रत्यष्ठात् कठकौथुमम्।**

सिद्ध का कथन होने पर चरणवाचक शब्दों का द्वन्द्व एकवत् होता है। लुङन्त स्था धातु तथा लुङन्त इण् धातु के प्रयोग में ही। शाखा के अध्येता का वाचक को चरण कहते है। छात्रावस्था में परस्पर वार्तालाप प्रसङ्ग का स्मरण दिलाता है कि कठों के प्रतिष्ठित होने पर एवं कलापों का उदय होने पर हम दोनों को वहां जाना चाहिए वह काल उपस्थित हो गया था, अतः तुम इस बात को भूल गये हो यह अपने सहयोगी सहपाठी को कह रहा है। कठप्रोक्त शाखा के अध्ययन करने वालों को भी कठाः कहा जाता है यहां वैशम्पायन छात्र होने से णिनिप्रत्यय हुआ उसका 'कठचरकात्' से लुक् हुआ है। अध्येता अर्थ का अण् का प्रोक्ताल्लुक् से लुक् हुआ है। कलापिन् से अण् 'नान्तस्य टिलोपे 'सब्रह्मचारि' वा० से टिलोपाभाव है।

## ९१० अध्वर्युक्रतुरनपुंसकस्य २।४।४।

**यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत् स्यात्। अर्काश्वमेधम्। अध्वर्युक्रतुः किम्, इषुवज्रौ सामवेदे विहितौ। अनपुंसकं किम्, राजसूयवाजपेये। अर्धर्चादि।**

यजुर्वेद में विहित जो क्रतु तद्वाचक अनपुंसकलिङ्ग का द्वन्द्व एकवत् होता है। उदाहरण स्पष्ट है।

## ९११ अध्ययनतोऽविप्रकृष्टाख्यानाम् २।४।५।

**अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्। पदकक्रमकम्।**

अध्यकनकृत सामीप्य जिनका हो उनका द्वन्द्व एकवत् होता है। पदों का अध्ययन करनेवाले को 'पदक' कहते हैं, यहां क्रमादिभ्यो वुन् से वुन्प्रत्यय है। क्रम के अध्येता को क्रमक कहते हैं यहां भी वुन्प्रत्यय है। यहां पद एवं क्रम का सामीप्य है।

## ९१२ जातिरप्राणिनाम् २।४।६।

**प्राणिवर्जजातिवाचकानां द्वन्द्व एकवत्। धानाशष्कुलि। प्राणिनान्तु विट्शूद्राः। द्रव्यजातीयानामेव। नेह—रूपरसौ। गमनाकुञ्चने। जातिप्राधान्ये एवायम् एकवद्भावः। द्रव्यविशेषविवक्षायान्तु बदरामलकानि।**

प्राणिभिन्न जातिवाचक शब्दों का द्वन्द्व में एकवत् होता है। धानाश्च शष्कुल्यश्च धानाशष्कुलि। प्राणी का एकवद् भाव नहीं विट्शूद्राः। द्रव्यवृत्तिजातिवाचक का ही इससे एकवद्भाव होता है, गुणवृत्ति जातिवाचक का नहीं। यथा रूपरसौ। क्रियावाचक में एकवद् भाव नहीं होता है। गमनाकुञ्चने। जाति का प्राधान्य में एकवद्भाव, व्यक्ति के प्राधान्य में एकवद्भाव का अभाव है यथा

इमानि एव बदरामलकानि मह्यं रोचयन्ते यहां यही बेर यही आंवरे मुझे रुचिकर है यहां व्यक्ति का ही प्राधान्य है। जाति का नहीं। जाति वाच्यवयव में भी जाति का आरोप है। अप्राणिनाम्-पर्युदास से नञिवयुक्तन्याय से द्रव्यजातीय का लाभ है, अन्यथा जातिग्रहण ही व्यर्थ है, यह अर्थ पर्युदास से ही लाभ होता।

## ९१३ विशिष्टलिङ्गो नदीदेशोऽग्रामाः २।४।७।

**ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत् स्यात्। उद्ध्यश्च इरावती च, उद्ध्येरावति। गङ्गा च शोणश्च गङ्गाशोणम्। कुरवश्च कुरुक्षेत्रञ्च कुरुकुरुक्षेत्रम्। भिन्नलिङ्गानां किम्, गङ्गायमुने। मद्रकेकयाः। अग्रामाः किम्, जाम्बवं नगरम्। शालूकिनी ग्रामः। जाम्बवशालूकिन्यौ।**

ग्रामभिन्न भिन्नलिङ्क नदी एवं देशवाचक का द्वन्द्व एकवत् होता है। नद का भी नदी से ग्रहण है उद्ध्य नद है। शोण भी नद है। उद्ध्यश्च इरावती च उद्ध्येरावति। देशवाचक का कुरवश्च कुरुक्षेत्रञ्च कुरुकुरुक्षेत्रम्। एकलिङ्क का इतरेतरयोग—गङ्गायमुने। मद्रकेकयाः। ग्रामवाचक का भी इतरेतरयोग ही होता है, यथा – जाम्बवशालाकिन्यौ।

## ९१४ क्षुद्रजन्तवः २।४।८।

**एषां समाहारे द्वन्द्व एकवत् स्यात्। यूकालिक्षम्। आनकुलात् क्षुद्रजन्तवः।**

क्षुद्रजन्तु वाचक शब्दों का द्वन्द्व में एकवद् भाव ही होता है। जिनको हड्डी नहीं या आकृति में अतिक्षुद्र हो उसमें ही इसकी प्रवृत्ति है। कोई नकुलतक क्षुद्रजन्तु माने गये हैं ऐसा कहते है।

## ९१५ येषां च विरोधः शाश्वतिकः २।४।९।

**एषां प्राग्वत्। अहिनकुलम्। गोव्याघ्रम्। काकोलूकम् इत्यादौ परत्वाद् विभाषा वृक्षमृगेति प्राप्तं चकारेण बाध्यते।**

जिन जन्तुओं का विरोध परस्पर स्वाभाविक है उनका द्वन्द्व एकवत् होता है। अहयश्च नकुलाश्च अहिनकुलम्। गावश्च व्याघ्राश्च गोव्याघ्रम्। काकाश्च उलूकाश्च काकोलूकम्। यहां इसको बाधकर परत्व के कारय 'विभाषा वृक्षमृग' प्राप्त था किन्तु यहां 'च' यह पृथक् सूत्र है इसमें इसके सभी अंशों की अनुवृत्ति है दो अंश समानार्थक है यहां 'च' सूत्र 'येषाम्' का बाधक जो 'विभाषा' उसको बाध करता है, अर्थात् च सूत्र बाधक बाधनार्थ ही है।

## ९१६ शूद्राणामनिरवसितानाम् २।४।१०।

**अबहिष्कृतानां शूद्राणां प्राग्वत्। तक्षायस्कारम्। पात्राद् बहिष्कृतानान्तु चाण्डालमृतपाः।**

पात्र से जो बहिष्कृत नहीं है ऐसे शूद्रजातिवाचक शब्दों का द्वन्द्व एकवत् होता है। बढ़ई एवं लुहार इनके पात्र अबहिष्कृत है उस तक्ष एवं अयस्कार का द्वन्द्व एकवत् हुआ। एवं पात्र से बहिष्कृतों का एकवद् भाव न होकर वहां इतरेतरयोग से द्विवचनादि। जिसके भोजन करने पर कासा आदि धातुओं से निर्मित पात्र भस्मादि से शुद्ध स्मृति शास्त्रोक्त हो वह अबहिष्कृत पात्र वाले समझे जाते हैं। 'भस्मना शुद्धये कांस्यम्' इति अन्यत्र एकवद् भाव नहीं होता है।

**विमर्श**— सम्प्रति मिट्टी के पात्र में अनेक वर्ण एक ही पात्र में भोजनरूप अनाचार जो करते हैं वे अपने मान्य ग्रन्थों का अनुशीलन करें। आहार शुद्धि पात्रशुद्धि सत्त्वशुद्धि द्रव्यशुद्धि का प्रभाव मन पर पड़ता है एवं ध्रुवा बुद्धि पर पड़ता है। आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा मतिः अन्नमयं हि सौम्यः मनः। भारतीय पैर धोकर कौशेयवस्त्र धारणकर पवित्र भूमि में बलि वैश्वदेव पूर्वक भोजन करते हैं वे भारतीय वास्तविक है। अन्यका अनुकरणकर शिष्टाचार को तिलाञ्जलि देकर अपने को आङ्ग्लों के मानस पुत्र बनने का जो क्रम है वह हिन्दुत्व भारतीयत्व आर्यत्व के विरुद्ध है। जूते पहनकर भोजन में वे लज्जा का अनुभव नहीं करते हैं। अपने पूर्वजों का सदा उपहास में ही सभ्य बनने का दम्भ करते हैं वे नेत्रों को विकसित कर इस सूत्र एवं इसका भाष्य को देखें भाई-भाई। एक साथ भोजन करने पर भी भयानक द्वेष देखा गया है, अतः सह-भोजनप्रेम का परिचायक नहीं है समाज में स्थित सभी के साथ बन्धुत्व रक्खो घृणा नहीं, उच्च-नीच भाव न रक्खो किन्तु धार्मिक मर्यादा का पालन करना स्वास्थ्य दृष्टि से भी अनुकूल है। अपने यहां चिंट्टी से भी प्रेम करना उनके बीलों पर आटे का वितरण लिखा है। घृणास्पद वातावरण अनेक कुटिल राजनीतिज्ञों ने फैलाया है, स्वस्वार्थवश। अपने अपने अधिकार क्षेत्र में ऊच एवं नीच का भाव भारत में न था, न है, न रहेगा। यह शास्त्रीय सिद्धान्त है। सभी मानवों में ईश्वर की मूर्ति देखो।

## ९१७ गवाश्वप्रभृतीनि च २।४।११।

यथोच्चारितानि साधूनि स्युः। गवाश्वम्। दासीदासम् इत्यादि।

गवाश्व प्रभृति शब्द जहां जैसे शिष्टों से उच्चरित है वे वैसे ही रहते है। उसमें उन प्रयोग के विरुद्ध शास्त्र प्रवृत्ति का प्रयास नहीं करना चाहिये। यथा गवाश्वम्। दासीदासम्।

## ९१८ विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्ववडव-पूर्वापराधरोत्तराणाम् २।४।१२।

वृक्षादीनां सप्तानां द्वन्द्वः, अश्ववडवेत्यादिद्वन्द्वत्रयञ्च प्राग्वद् वा। वृक्षादौ विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधम्। प्लक्षन्यग्रोधाः। रुरुपृषतम्। रुरुपृषताः। कुशकाशम्। कुशकाशाः। व्रीहियवम्। व्रीहियवाः दधिघृतम्। दधिघृते। गोमहिषम्। गोमहिषाः। शुकबकम्। शुकबकाः। अश्ववडवम्। अश्ववडवौ। पूर्वापरम्। पूर्वापरे। अधरोत्तरम्। अधरोत्तरे। ॐफलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्ॐ। बदराणि च आमलकानि च बदरामलकम्। जातिरप्राणिनामित्यकेवद्भावः। नेह, बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधा। इत्यादि। विभाषा वृक्षेति सूत्रे येऽप्राणिनस्तेषां ग्रहणं जातिरप्राणिनामिति नित्ये प्राप्ते विकल्पार्थम्। पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते मृगाणां मृगैरेव, शकुनीनां तैरेवोभयत्र द्वन्द्वः। अन्यैस्तु सहेतरेतरयोग एवेति नियमार्थं मृगशकुनिग्रहणम्। एवं पूर्वापराधरोत्तरमित्यपि। अश्ववडवग्रहणन्तु पक्षे नपुंसकत्वार्थम्। अन्यथा परत्वात् पूर्ववदश्ववडवाविति स्यात्।

वृक्ष, मृग, तृण, धान्य, व्यञ्जन, पशु एवं शकुनि इन सात शब्दों का द्वन्द्व एवं अश्ववडव, पूर्वापर, अधरोत्तर यह तीन का द्वन्द्व विकल्प से एकवत् होता है। शिष्टोक्तव्याख्यान से वृक्ष में विशेष ग्रहण है। वृक्षविशेष वाचक का द्वन्द्व एकवत् होता है। विकल्प से एकबार से पक्ष में इतरेतर योग में अवयव गत सङ्ख्या प्रयुक्त द्विवचनादि होते है।*फल, सेना, वनस्पति, मृग, शकुनि, क्षुद्रजन्तु, धान्य, तृण इन शब्दों के बहुवचन प्रकृतिक द्वन्द्व को एकवत् होता है। यथा बदराणि च आमलकानि च बदरामलकम् यहां 'जातिरप्राणिनाम्' सूत्र से एकवद्भाव हुआ है।

द्विवचन में एकवद्भाव नहीं होता है बदरामल के। रथिकाश्वारोहौ यहां द्वन्द्वश्च सूत्र से एकवद्भाव का अभाव है। प्लक्षन्यग्रोधौ में विभाषा से एकवद्भाव का अभाव है यहां अप्राणिवाचक शब्दों का ग्रहण नित्यार्थ है, विकल्प को बाध करके। पशुग्रहण सेनाङ्गत्व के कारण नित्य एकवद्भाव प्राप्त था, यहां नियमार्थ ही है मृगों का मृगों के साथ ही द्वन्द्व एवं एकवद्भाव। एवम् शकुनियों का शकुनियों के साथ द्वन्द्व पूर्वक एकवद्भावार्थ है। अन्यों के साथ इतरेतरयोग द्वन्द्व ही होता है इस नियम के लिए मृग एवं शकुनि का यहां ग्रहण है। इसी प्रकार पूर्व अपर अधर उत्तर में समझना चाहिये। पक्ष में नपुंसकत्व के लिए अश्ववडव ग्रहण यहां किया है, यहां इसका ग्रहण न करने पर परत्व के कारण 'पूर्ववत्' सूत्र से एक ही रूप 'अश्ववडवौ' यही होता।

## ९१९ विप्रतिषिद्धं चानधिकरणवाची २।४।१३।

**विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद् वा स्यात्। शीतोष्णे। वैकल्पिकः समाहारद्वन्द्वश्चार्थेइति सूत्रेण प्राप्तः स विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम्। तेन द्रव्यवाचिनामेतरेतरयोग एव। शीतोष्णे उदके स्तः। विप्रतिषिद्धं किम्, नन्दकपाञ्चजन्यौ। इह पाक्षिकः समाहारद्वन्द्वो भवत्येव।**

परस्पर विरुद्धार्थक एवं अद्रव्य वाचक शब्दों का द्वन्द्व विकल्प से एकवत् होता है शीतञ्च तत् उष्णञ्च शीतोष्णम्। पक्ष में शीतोष्णे। चार्थे द्वन्द्वः से वैकल्पिक समाहार द्वन्द्व प्राप्त ही था यह सूत्र व्यर्थ होकर नियम के लिए है। "यदि विरुद्धार्थक शब्दों का समाहार द्वन्द्व समास हो तो अद्रव्यार्थ का ही" इससे सिद्ध यह हुआ कि द्रव्य वाचकों का इतरेतरयोग द्वन्द्व ही होगा। कभी भी समाहार द्वन्द्व नहीं होगा। नियम इतर व्यावर्तक होता है, व्यावर्त्य यहां समाहार द्वन्द्व द्रव्यार्थकों का हुआ। जलार्थक शीत एवं उष्ण का इतरेतरयोग से 'शीतोष्णे उदके'। नन्दक भी शङ्ख का नाम एवं पाञ्चजन्य भी शङ्ख का ही नाम है दोनों एकार्थक पर्याय है, विरुद्धार्थक नहीं यहां इतरेतर योग से नन्दकपाञ्चजन्यौ। यहां पक्ष में इस नियम की अप्रवृत्ति से 'नन्दकपाञ्चजन्यम्' होता ही है।

## ९२० न दधिपयादीनि २।४।१४।

**एतानि नैकवत्स्युः। दधिपयसी। इध्माबर्हिषी। निपातनात् दीर्घः। ऋक्सामे। वाङ्मनसे।**

व्यञ्जन न होने से विकल्प प्राप्त एकवद् भाव दधि पयादि का नहीं होता है द्वन्द्व में। दधि च पयश्च इति दधिपयसी। इध्माबर्हिषी यहां पूर्वपद के अन्तिम का निपातन से दीर्घ है यहां जिन जिन सूत्रों से इसके विषय में एकवद्भाव प्राप्त है उन उन समस्त शास्त्रों का यह बाधक है, अतः यहां बहुवचन निर्देश है। अनेक बाध्य है। ऋक्सामे। वाङ्मनसे यहां 'अचतुर्' से समासान्त अच् प्रत्यय है।

## ९२१ अधिकरणैतावत्त्वे च २।४।१५।

द्रव्यसंख्यावगमे एकवदिति नियमो न स्यात्। दश दन्तोष्ठाः।

'द्वन्द्वश्च' का यह बाधक है। द्रव्य की संख्या का 'अवगम=ज्ञान होने पर एकवत् यह नियम की प्रवृत्ति नहीं होती है, प्राण्यङ्ग के कारण एकवद्भाव प्राप्त था उसका निषेध हुआ, 'चार्थे' से समाहार द्वन्द्व यहां समाहार में प्राप्त नहीं है क्योंकि—"सविशेषणां वृत्ति नं, वृत्तस्य विशेषणयोगो न' से द्वन्द्व की अप्राप्ति है। इतरेतरयोगद्वन्द्व में सामान्याप्रयोग से प्रधान सापेक्ष में वृत्ति होती ही है।

## ९२२ विभाषा समीपे २।४।१६।

अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहार एवेत्येवंरूपो नियमो वा स्यात्। उपदशं दन्तोष्ठाः।

द्रव्यगत संख्या के अवगम का सामीप्य से परिच्छेदन होने पर समाहार द्वन्द्व ही हो यह नियम की प्रवृत्ति विकल्प से नहीं होती है। उपदशं दन्तोष्ठम्। उपदशा दन्तोष्ठाः। अव्ययीभाव का ही अनुप्रयोग होता है। बहुव्रीहि में तो उपदशस्य दन्तोष्ठस्य। यहाँ षष्ठी ही होती है।

## ९२३ आनङ् ऋतो द्वन्द्वे ६।३।२५।

विद्यायोनिसम्बन्धवाचिनाम् ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः। मातापितरौ। पुत्रेऽन्यतरस्यामित्यतो-मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेः पितापुत्रौ।

विद्या एवं योनिसम्बन्ध वाचक ऋकारान्त शब्दों के द्वन्द्व में उत्तरपद पर रहते आनङ् आदेश होता है। अनेक का द्वन्द्व में उत्तरपद से जो पूर्व उसी को आनङ्। चार का यहाँ द्वन्द्व किया तीसरे के ऋकारको आन् कर नलोप करना। आनङ् न कर केवल ऋकार को आ करने में यद्यपि लाघव है किन्तु रपरत्व अनिष्ट की प्रसक्ति होती। आन् विधानमें वह अण् नहीं अतः रपरत्व यहाँ न हुआ। योनिसम्बन्ध में मातापितरौ। यहां 'पुत्रे' सूत्र से मण्डूकप्लुति से पुत्र की अनुवृत्तिकर पितापुत्रौ यहाँ भी आनङ् हुआ है।

## ९२४ देवताद्वन्द्वे च ६।३।२६।

इहोत्तरपदे आनङ्। मित्रावरुणौ। ❀वायुशब्दप्रयोगे प्रतिषेधः❀। अग्नि-वायू। वाय्वग्नी। पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम्। तेन 'ब्रह्म-प्रजापती' इत्यादौ नानङ्। एतद्धि नैकहविर्भागत्वेन श्रुतं नापि लोके प्रसिद्धं साहचर्यम्।

देवतावाचक शब्दों के द्वन्द्व में उत्तरपद पर रहते आनङ् होता है। मित्रश्च वरुणश्च मित्रावरुणौ। वायुशब्द के प्रयोग में पूर्वपद को आनङ् नहीं होता है। अग्निवायू। अथवा वाय्वग्नी। 'द्वन्द्वे च' से द्वन्द्व की अनुवृत्ति से कार्यनिर्वाह होता पुनः इसमें जो द्वन्द्व ग्रहण है वह प्रसिद्ध देवता साहचर्य का ग्रहण के लिए है। 'ब्रह्मप्रजापती' का लोक में या वेद में एक हविः का उपभोग रूप साहचर्य नहीं है, अतः यहाँ आनङ् न हुआ।

## ९२५ ईदग्नेः सोमवरुणयोः ६।३।२७।

देवताद्वन्द्वे इत्येव ।

देवतावाचक शब्द में सोम या वरुण उत्तर पद रहते अग्निशब्द के अन्त्य इकार को ईकारादेश होता है ।

## ९२६ अग्नेः स्तुत्स्तोमसोमाः ८।३।८२।

**अग्नेः परेषामेषां सस्य षः स्यात् समासे ।**

यह सात्पदाद्योः का बाधक है । अग्निरूप कर्मोपपदक स्तुञ् से सम्पदादित्वात् क्विप् समास तुक् अग्निस्तुत् षत्व ष्टुत्व अग्निष्टुत् । अग्नीनां स्तोमः = अग्निष्टोमः ।

सोम याग की संस्थाओं में प्रथम संस्था को सोम कहते हैं । अग्नीसोमौ यहां पूर्वपद के इकार को ईकारादेश एवं सोम के सकार को षकारादेश है । अग्नीवरुणौ यहां भी इकार को ईकारादेश है ।

## ९२७ इद्वृद्धौ ६।३।२८।

**वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्यात् देवताद्वन्द्वे । अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम् । देवताद्वन्द्वे चेत्युभयपदवृद्धिः । अलौकिकवाक्ये आनङ् ईत्वञ्च बाधित्वा इः । वृद्धौ किम् आग्नेन्द्रः । नेन्द्रस्य परस्येत्युत्तरपदवृद्धिप्रतिषेधः । *विष्णौ न* । आग्नावैष्णवम् ।**

देवता वाचक शब्दों के द्वन्द्व समास में वृद्धियुक्त पद उत्तर में रहते अग्नि शब्द के अन्तिम वर्ण को इकारादेश होता है । यथा अग्निश्च मरुतश्च अग्नामारुतौ, ते देवते अस्य कर्मणः अण्प्रत्यय । यहां समासार्थ अलौकिक विग्रह वाक्य में प्राप्त आनङ् एवं ईत्व को बाधकर स्वरूपस्थित इकार की रक्षार्थ इकार को इकारादेश किया है, आग्निमारुतं कर्म । इसी प्रकार आग्निवारुणम् । यद्यपि यहां वृद्धि के पूर्व आनङ् एवं ईत्व की प्रवृत्ति अन्तरङ्गत्व प्रयुक्त है, उस समय निषेध की प्राप्ति नहीं होती तो भी अपवाद विषय भविष्यत् है वहां अन्तरङ्ग कार्य की पूर्व अप्रवृत्ति ही है ।

'आग्नेन्द्रः' यहां उत्तर पद वृद्धि युक्त नहीं है, यहां 'नेन्द्रस्य परस्य' से उत्तर इन्द्र के आदि अच् इकार की वृद्धि का निषेध है । यहां शङ्का हुई कि इन्द्र में दो अच् है एक अकार एवं इकार इनमें अकार का यस्येति से लोप है । इकार का अन्तरङ्ग गुण से अपहार है, 'न्द्र्' अच् रहित है यहां वृद्धि का प्रसङ्ग ही नहीं है 'नेन्द्रस्य परस्य' सूत्र क्यों किया, वह व्यर्थ हो कर ज्ञापन करता है कि पूर्वोत्तर पद सम्बन्धि वर्ण निमित्तक अन्तरङ्ग भी एकादेश अपवाद विषय में पूर्व प्रवृत्त नहीं होता है अत गुण प्रथम नहीं होता है ।

*विष्णु शब्द उत्तरपद रहते यह इत्व नहीं होता है, अतः पूर्व को आनङ् । यथा आग्नावैष्णवम् ।

## ९२८ दिवो द्यावा ६।३।२९।

**देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षमे ।**

देवता वाचक द्वन्द्व उत्तर में रहते दिव को द्यावा आदेश होता है । द्यावाभूमी । द्यावाक्षमे ।

## ९२९ दिवसश्च पृथिव्याम् ६।३।३०।

दिव इत्येव। चाद् द्यावा। आदेशे अकारोच्चारणं सकारस्य रुत्वं मा भूदित्येतदर्थम्। द्यौश्च पृथ्वी च दिवस्पृथिव्यौ। द्यावापृथिव्यौ। छन्दसि दृष्टानुविधिः। द्यावाचिदस्मै पृथिवी। दिवस्पृथिव्योररतिमित्यत्र पदकारा विसर्गं पठन्ति।

पृथ्वी शब्द पर रहते दिव् को दिवस आदेश होता है एवं चकार से द्यावा आदेश भी होता है। आदेश दिवस में अकार का उच्चारण रुत्व को निवारणार्थ है, पदन्तसकार नहीं है। वेद में प्रयोगाधीन सूत्र है। लौकवत् सूत्राधीन प्रयोग नहीं है। अतः दिवस् के सकार को वेद में पदान्त मान कर रुत्व विसर्ग कर विसर्गान्त पदकार पढ़ते हैं मन्त्र में।

## ९३० उषासोषसः ६।३।३१।

उषस् शब्दस्योषासादेशो देवताद्वन्द्वे। उषासासूर्यम्।

देवता वाचक शब्द के द्वन्द्व में उषस् को उषासा आदेश होता है। यथा उषाश्च सूर्यश्च उषासासूर्यम्। समाहारद्वन्द्व है।

## ९३१ मातरपितरावुदीचाम् ६।३।३२।

मातरपितरौ। उदीचां किम्, मातापितरौ।

उदीचों के मत में 'मातरपितरौ' इसमें मातृशब्द को निपातन से अरङ् आदेश होता है। उदीचों के मत में ऐसा क्यों कहा ?, तो अन्यमत में 'मातापितरौ' रूप हुआ है।

## ९३२ द्वन्द्वाच्चुदषहान्तात् समाहारे ५।४।१०६।

चवर्गान्ताद् दषहान्ताच्च द्वन्द्वाट्टच् स्यात् समाहारे। वाक् च त्वच् च वाक्त्वचम्। वाक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्, प्रावृट्शरदौ।

### इति द्वन्द्वसमासप्रकरणम्

समाहार द्वन्द्व में चवर्गान्त, दकारान्त, षकारान्त हकारान्त शब्दों के उत्तर टच् प्रत्यय होता है। इतरेतर योग में इसकी प्रवृत्ति नहीं होती है। अनेक के द्वन्द्व में यथा वाक्त्वक्स्रज् यही होता है। द्वन्द्व गर्भित द्वन्द्व में वाक्त्वचस्रजम्।

पं० श्री बा० कृ० पञ्चोलिविरचित रत्नप्रभा में द्वन्द्व समास समाप्त।

# अथैकशेषप्रकरणम् ॥ १९ ॥

**सरूपाणाम्। रामौ। रामाः। ॐविरूपाणामपि समानार्थानाम्ॐ। वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ। कुटिलदण्डौ।**

सम्पूर्ण विभक्तियों में समानरूपवाले समानार्थक-शब्दों में अनेक में से एकशेष रहता है। अर्थात् अन्यों का या अन्य का लोप होता है। एवं जो शेष रहता है वह स्वार्थ एवं लुप्त इन दोनों का अर्थ का बोधक है "यः शिष्यते स लुप्यमानार्थाभिधायी'। शब्दवृत्ति वर्णमाला असमान रहते हुए भी यदि एकार्थ बोधक है तो वहां भी एकशेष होता है। यथा वक्रदण्डः एवं कुटिलदण्डः में भी एकशेष हुआ है।

## ९३३ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १।२।६५।

**यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वृद्धः किम्, गर्गगार्ग्यायणौ। यूना किम्, गर्गगार्ग्यौ। तल्लक्षणः किम्, भागवित्तिभागवित्तिकौ। कृत्स्नं किम्, गार्ग्यवात्स्यायनौ।**

युव प्रत्ययान्त के साथ वृद्ध = गोत्र प्रत्ययान्त की उक्ति होने पर गोत्र प्रत्ययान्त का ही अवशेष रहता है, किन्तु गोत्र प्रत्यय एवं युवप्रत्ययमात्रकृत ही वैरूप्य रहने पर। यथा गार्ग्य यह गोत्रप्रत्ययान्त यञन्त का रूप है, यञन्त से युवापत्य में फक् उसको आयन् से गार्ग्यायण युवप्रत्ययान्त है, इन दोनों में प्रत्ययमात्रकृत ही वैरूप्य अन्यांश में साम्य है, अतः गार्ग्यायण का लोपपूर्वक गोत्रप्रत्ययान्त गार्ग्य का शेष रहा—गार्ग्यौ = का अर्थ गर्ग के गौत्रापत्य एवं गर्ग के युवापत्य का बोधक, 'यः शिष्यते' न्याय से है। गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ यहां गर्ग गोत्रप्रत्ययान्त नहीं है। अतः एकशेष न हुआ। 'गर्गगार्ग्यौ' यहां युवार्थक प्रत्यय न होने से एकशेष न हुआ। भगवित्तस्य गोत्रापत्यम् भागवित्तिः से युवार्थक 'वृद्धात्' से ठक यहां कुत्सा एवं सौवीरत्व का अधिक मान, है अतः एकशेष न हुआ तल्लक्षण ग्रहण से। कृत्स्न से गार्ग्यवात्स्यायनौ यहां एकशेष न हुआ।

## ९३४ स्त्रीपुंवच्च १।२।६६।

**यूना सहोक्तौ वृद्धा स्त्री शिष्यते, तदर्थश्च पुंवत्। गार्गी च गार्ग्यायणौ च गर्गाः। अस्त्रियामित्यनुवर्तमाने यञञोश्चेति लुक्। दाक्षी च दाक्षायणश्च दाक्षी।**

युवप्रत्ययान्त के साथ गोत्रप्रत्ययान्त स्त्रीवाचक शब्द की उक्ति = कथन होने पर स्त्रीवाचक ही अवशिष्ट रहता है। एवं उसका अर्थ पुंवाचक समान होता है। यथा—स्त्रियाम् में गार्गी होता है वह गोत्रप्रत्ययान्त है, गार्ग्यायण युवप्रत्ययान्त है यहां एकशेष एवं पुंवत् से 'गर्गाः' यही हुआ है। अस्त्रियाम् की अनुवृत्ति होने पर यहां यञञोश्च से यञ् प्रत्यय का लुक् पुंल्लिङ्ग में है। दक्ष से इन् दाक्षि से इतो मनुष्यजातेः। से ङीप् दाक्षी च दाक्षायणश्च दाक्षी।

## ९३५ पुमान् स्त्रिया १।२।६७।

स्त्रिया सहोक्तौ पुमान् शिष्यते, तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ।

स्त्रीवाचक एवं पुंवाचक में पुंवाचक का एकशेष होता है। यदि स्त्रीत्व पुंस्त्वकृत ही विशेष हो। हंसी च हंसश्च इति हंसौ।

## ९३६ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १।२।६८।

भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।

स्वसृ एवं दुहितृ के साथ उक्ति होने पर भ्रातृ एवं पुत्र का एकशेष रहता है। भ्रातरौ। पुत्रौ।

## ९३७ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १।२।६९।

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्तल्लक्षण एव विशेषश्चेत्। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम् तदिदं शुक्लं तानीमानि शुक्लानि।

अक्लीब के साथ (पुंल्लिङ्ग स्त्रीलिङ्ग के साथ) उक्ति होने पर नपुंसक अवशिष्ट रहता है वह एकवत् विकल्प से होता है। शुक्लम् या शुक्लानि। तीनों लिङ्ग शुक्ल शब्द है।

## ९३८ पिता मात्रा १।२।७१।

मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ। मातापितरौ।

मातृ एवं पितृ सुबन्त द्वय का एकशेष में पितृशब्द का विकल्प से एकशेष होता है। यथा- पितरौ। मातापितरौ।

## ९३९ श्वशुरः श्वश्र्वा १।२।७०।

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत्। श्वश्रूश्च श्वशुरश्च श्वशुरौ। श्वश्रूश्वशुरौ।

श्वश्रू के साथ उक्ति होने पर विकल्प करके श्वशुर शब्द शेष रहता है। यदि स्त्रीत्व एवं पुंस्त्व कृत विशेषमात्र हो तब। ऊङ् प्रत्ययान्त सासवाचक श्वश्रू है।

## ९४० त्यदादीनि सर्वैर्नित्यम् १।२।७२।

सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च तौ।

❀त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते❀। स च यश्च यौ। पूर्वशेषोऽपि दृश्यत इति भाष्यम्। स च यश्च तौ। ❀त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि❀। सा च देवदत्तश्च तौ। तच्च देवदत्तश्च यज्ञदत्ता च तानि। पुंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते। तच्च देवदत्तश्च ते। ❀अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्❀। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तच्च सा च अर्धपिप्पल्यौ च ते।

सब शब्दों के साथ उक्ति होने पर त्यदादि नित्य शेष रहता है। स च देवदत्तश्च तौ। त्यदादि शब्दों का कथन होने पर, पर जो त्यदादि वही अवशिष्ट रहता है। स च यश्च यौ। किसी

स्थलविशेष में पूर्वशेष भी रहता है यह भाष्यमत है। स च यश्च तौ। त्यदादि शब्दों का एकशेष होने पर पुंल्लिङ्ग एवं नपुंसकलिङ्ग के अनुसार लिङ्गवचन होता है। स्त्रीलिङ्ग भी पुंल्लिङ्ग एवं स्त्रीलिङ्ग भी नपुंसक होता है एकशेष में। यथा सा च देवदत्तश्च तौ। तत् देवदत्तः यज्ञदत्ता यह्यं तानि। पुंल्लिङ्ग एवं नपुंसक का एकशेष में परत्व के कारण नपुंसक का शेष रहता है। तच्च देवदत्तश्च ते। द्वन्द्व एवं तत्पुरुष में पूर्वोक्त कार्य नहीं होता है। वहां विशेष्यगत लिङ्ग ही होता है। उत्तरपद मयूरीगत स्त्रीत्व से अनुप्रयोग मे इमे। उत्तरपद कुक्कुट होने से तद्गत लिङ्ग से अनुप्रयोग में इमौ। उत्तरपद अर्धपिप्पलीगत स्त्रीत्व से 'ते'।

## ९४१ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री १।२।७३।

**एषु सहविवक्षायां स्त्री शिष्यते। पुमान् स्त्रियेत्यस्यापवादः। गाव इमाः। ग्राम्येति किम्, रुरव इमे। पशुग्रहणं किम्, ? ब्राह्मणाः। सङ्घेषु किम्, एतौ गावौ। अतरुणेषु किम्, वत्सा इमे। *अनेकशफेष्विति वाच्यम्*। अश्वा इमे। इह सर्वत्र एकशेषे कृतेऽनेकसुबन्तत्वाभावाद् द्वन्द्वो न। तेन शिरसी शिरांसीत्यादौ समासस्येत्यन्तोदात्तः, प्राण्यङ्गत्वादेकवद्भावश्च न। पन्थानौ, पन्थान इत्यादौ समासान्तो न।**

### इत्येकशेषप्रकरणम्

अतरुण ग्रामीण पशु समुदाय की सहविवक्षा में स्त्रीवाचक शब्द का एकशेष होता है। यह सूत्र पूर्वोक्त 'पुमान् स्त्रियाः' का बाधक है। यथा इमा गावः। ग्राम्य पशु का अभाव में इसकी प्रवृत्ति नहीं होती है। अनेक खुर विशिष्ट पशुसमूह में सहविवक्षा में यह एकशेष करता है एक खुर वाले पशुओं में नहीं। अन्तरङ्ग एकशेष प्रातिपदिकावस्था में सुबुत्पत्ति से पूर्व होता है अन्तरङ्गत्व के कारण, अब अनेक सुबन्त ही नहीं, अतः द्वन्द्व की अप्राप्ति है, अप्राप्ति लक्षण एकशेष द्वन्द्वापवाद यह प्रवाद है, अप्राप्ति लक्षण अपवाद शब्द अपवाद सदृश परक है। इस कारण शिरसी आदि में 'समासस्य' से अन्तोदात्त न हुआ। एवं प्राण्यङ्ग मानकर एकवद्भाव भी न हुआ। पन्थानौ आदि में 'ऋक्पूरब्धू' से अप्प्रत्यय समासान्त न हुआ।

पं० श्री बा० कृ० पञ्चोलि विरचित रत्नप्रभा में एकशेष प्रकरण समाप्त।



# अथ सर्वसमासशेषप्रकरणम् ॥ २० ॥

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः। परार्थाभिधानं वृत्तिः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विधा लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात् साधुर्लौकिकः। प्रयोगानर्होऽसाधुरलौकिकः। यथा राज्ञः पुरुषः। राजान् अस् पुरुष सु इति। अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा।

समासश्चतुर्विध इति प्रायोवादः। अव्ययीभावतत्पुरुष-बहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि सह सुपेति समासविधानात्। पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वन्द्वः। इत्यपि प्राचां प्रवादः प्रायोवादः। 'सूपप्रति' उन्मत्तगङ्गमित्याद्यव्ययीभावे, अतिमालादौ तत्पुरुषे, 'द्वित्राः' इत्यादि बहुव्रीहौ, दन्तोष्ठमित्यादि द्वन्द्वे, चाभावात्। तत्पुरुषविशेषः कर्मधारयः। तद्विशेषो द्विगुः। अनेकपदत्वं द्वन्द्वबहुव्रीहावेव। तत्पुरुषस्य क्वचिदेवेत्युक्तम्। किञ्च,

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥ १ ॥

सुपां सुपा-राजपुरुषः। तिङा-पर्यभूषयत्। नाम्ना-कुम्भकारः। धातुना-कटप्रूः, अजस्रम्। तिङां तिङा-पिबतखादता, खादतमोदता। तिङां सुपा-कृन्त विचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा। एडीडादयोऽन्यपदार्थे इति मयूरव्यंसकादौ पाठात् समासः।

## इति सर्वसमासशेषप्रकरणम्।

पाँचों की वृत्तिसंज्ञा है, यह पूर्वाचार्यों ने कहा था, उसका इन्होंने भी समाश्रयण किया है। कृत, तद्धित, समास, एकशेष, सनाद्यन्त धातुरूप यह पांच वृत्तियों है। इसीको पदविधि कहते है, वे कार्य सामर्थ्य में ही होते है। यहां एकार्थीभाव रूप ही सामर्थ्य गृहीत है। जिससे दूसरा पदार्थ अभिहित हो उसे वृत्ति कहते है। वृत्ति के अर्थ का ज्ञापक वाक्य को विग्रह कहते है। वह विग्रह दो प्रकार का है। लौकिक, एवं अलौकिक परिनिष्ठित इनमें लौकिक साधु है।

अप्रवृत्त जो नित्यशास्त्र का उद्देश्य वहां न रहे उसको परिनिष्ठित कहते है = 'अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं परिनिष्ठितत्वम्'' यह परिनिष्ठित का लक्षण है। लोक में प्रयोग के लिए अयोग्य को अलौकिक कहते है। यथा राज्ञः पुरुषः, यह लौकिक है। राजन् अस् पुरुष स् यह अलौकिक है। शास्त्रीय सर्वविध कार्य अलौकिक विग्रह वाक्य में ही होते है। लौकिक में नहीं, वहां वाक्यस्थिति है। नित्यसमास उसको कहते है जहां विग्रह ही न हो, या विग्रह हो तो भी समस्यमान के साथ नहीं, किन्तु उसका पर्याय वाचक किसी शब्द के साथ।

समास चार प्रकार के है, यह भी प्रायः एवम्=इस प्रकार का वाद : कथन है अर्थात् प्रायिक है, अन्य भी समास है। जो अव्ययीभाव के अधिकार में नहीं है, एवं तत्पुरुष के अधिकार में नहीं है।

बहुव्रीहि के अधिकार में नहीं है, द्वन्द्व के अधिकार में नहीं है एवं समास संज्ञक है। यथा 'सह' यथा 'सुपा' दो विभक्त सूत्रों से विहित समास जो सामान्य समास नाम से व्यवहृत हैं।

एवं वक्ष्यमाण समासों का लक्षण भी प्रायोवाद अर्थात् प्रायिक है। 'व्यावृत्ति र्व्यवहारो वा लक्षणस्य प्रयोजनम्'। लक्षण में अव्याप्ति, अतिव्याप्ति एवं असम्भव ये तीन दूषण न रहे उसे लक्षण कहते है, लक्ष्य में लक्षण की अप्रवृत्ति को अव्याप्ति कहते है। अलक्ष्य में लक्षण प्रसक्ति को अतिव्याप्ति कहते है। किसी भी अभिमत लक्ष्य में लक्षण न जाय उसे असम्भव कहते है।

प्राचीनोक्त लक्षणनिर्देश कर पश्चात् इसमें दूषणों का उपन्यास किया जाता है। प्रकृत में पूर्वपद का अर्थ प्रधान रहे उसको अव्ययीभाव कहते हैं। प्रधान का अर्थ मुख्य, मुख्य का अर्थ विशेष्य। अप्रधान का अर्थ विशेषण है, विशेषण गौण उपसर्जन अप्रधान ये सब शब्द एकार्थ बोधक पर्य्याय है। उत्तरपदार्थ प्रधान को तत्पुरुष कहते हैं। समस्यमान पदों के अर्थ से अतिरिक्त जो अन्यपदार्थ वह प्रधान जहां रहे उसे बहुव्रीहि कहते है। उभय पदार्थ प्रधान को द्वन्द्व कहते है।

'सूपप्रति' 'उन्मत्तगङ्गम्' यहां अव्ययीभाव समास में पूर्वपदार्थ प्राधान्य का अभाव है, अतिमालः तत्पुरुष में उत्तरपदार्थ प्राधान्य का अभाव है। दन्तोष्ठम् द्वन्द्व में उभयपदार्थ प्रधानत्व का अभाव है। समूह का वहां प्राधान्य है। अतः प्राचीनोक्त लक्षण दोष ग्रस्त होने से उपेक्ष्य है। किन्तु 'अव्ययीभावादि अधिकार पठितत्वम्' अव्ययीभावादि यही लक्षण ठीक है। तत्पुरुष का व्याप्यभेद कर्मधारय है, एवं वह यदि संख्या पूर्वक रहे तब द्विगु नाम से कहलाता है। अनेक = तीन आदि पद बहुव्रीहि एवं द्वन्द्व में ही है। तत्पुरुष में क्वचित् है।

छः प्रकार का समास इस कारिका में कहा गया है 'उदाहरण भी दिये गये हैं यथा पदद्वयसुबन्त का समास राजपुरुषः। पूर्वपदसुबन्त उत्तरपद तिङन्त का समासोदाहरण—पर्यभूषयत् यहां सह योगविभाग से छन्द में एवं लोक में भी क्वचित् समास होता है। पूर्वपद सुबन्त उत्तरपद प्रातिपदक का समास—कुम्भकारः। पूर्वपद सुबन्त उत्तरपद धातु का समास—कटप्रूः। तिङन्त तिङन्त का समास—पिबतखादता क्रिया। तिङन्त सुबन्त का समास कृन्तविचक्षणा। 'एहीडादयोऽन्यपदार्थे' यह मयूरव्यंसक का अवान्तर गणसूत्र है, वहां उसी से समास होता है।

पं० श्री बा० कृ० पञ्चोलिविरचित रत्नप्रभा में सर्वसमास शेष प्रकरण समाप्त।



# अथ समासान्तप्रकरणम् ॥ २१ ॥

## ९४२ ऋक्पूरब्धूः पथामानक्षे ५।४।७४।

अ अनक्षे इति च्छेदः। ऋगाद्यन्तस्य समासस्य अ प्रत्ययोऽन्तावयवः स्यात्। अक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। अनृचबह्वृचावध्येतर्य्येव। नेह, अनृक् साम, बह्वृग्सूक्तम्। विष्णोः पूः विष्णुपुरम्। क्लीबत्वं लोकात्। विमलापं सरः।

'आनक्षे' यहां अ अनक्षे ऐसा पदच्छेद है। ऋक् शब्दान्त, पूर् शब्दान्त अप् शब्दान्त धुर् शब्दान्त एवं पथिन् शब्दान्त समास को समासावयव अ प्रत्यय होता है, किन्तु शकट का अक्ष बोधक जो धुर् शब्द है तदन्त समास में अ प्रत्यय नहीं होता है। ऋचः अर्धम् इति अर्धर्चः। यहां 'अर्धर्चाः पुंसि च' से पुंस्त्व बोधन हुआ है। अनृच एवं बह्वृच इन दोनों को अध्ययन कर्ता अर्थ में अ प्रत्यय होता है। अन्यत्र नहीं। ऋक् मन्त्र रहित साम अनृक् साम यहां अ प्रत्यय न हुआ। अनेक ऋक् है जिस सूक्त में है वहां भी अ प्रत्यय नहीं हुआ। विष्णोः पूः विष्णुपुरम् षष्ठीतत्पुरुष एवं अप्रत्यय। यहां नपुंसत्व लोक से प्राप्त है। विमलाः आपः यस्मिन् सरसि तद् विमलापं सरः।

## ९४३ द्व्यन्तरुपसर्गेभ्योऽप ईत् ६।३।९७।

अप इति कृतसमासान्तानुकरणम् षष्ठ्यर्थे प्रथमा। एभ्यो अप ईत् स्यात्। द्विर्गता आपो यस्मिन् इति द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। समापो देवयजनमिति तु समा आपो यस्मिन्निति बोध्यम्। कृतसमासान्तग्रहणान्नेह। स्वप् स्वपी। ॐअवर्णान्ताद्वाॐ प्रेपम्। परेपम्। प्रापम्। परापम्।

'अप' सूत्र में समासान्तप्रत्यय से निष्पन्न रूप का अनुकरण है, इससे षष्ठी के अर्थ में प्रथमा है। द्वि एवं अन्तर तथा उपसर्ग से पर अप के अकार को ईत् होता है, यथा द्वीपम् आदि। 'समाप'। यहां उपसर्गपूर्वक न होने से ईकार न हुआ। स्वप् में समासान्त नहीं है अतः ईकार न हुआ। न पूजनात् से समासान्त अ प्रत्यय न हुआ। अवर्णान्त उपसर्ग से पर अप के अकार को ईकार विकल्प होता है। यथा प्रेपम् प्रापम् इत्यादि।

## ९४४ ऊदनोर्देशे ६।३।९८।

अनोः परस्यापस्य ऊत् आदेशः स्याद् देशे। अनूपो देशः। राजधुरा। अक्षे तु अक्षधूः। दृढधूरक्षः। सखिपथः, रम्यपथो देशः।

देश अर्थ में अनु से पर अप के अकार को ऊत् आदेश होता है। अनूपो देशः। ऋक्' सूत्र के उदाहरण कहते हैं—राज्ञः धूः राजधुरा यहां समास अप्रत्यय टाप् दीर्घ। धुर शब्द रथ के अक्ष वाचक है वहां समास अप्रत्यय नहीं होता है यथा अक्षधूः। दृढधूः। सख्युः पन्था इति सखिपथः। रम्य = पन्थाः यस्मिन् देशे स रम्यपथः।

## ९४५ अच् प्रत्यन्ववपूर्वात् सामलोम्नः ५।४।७५।

एतत्पूर्वात् सामलोमान्तात् समासात् अच् स्यात्। प्रतिसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। ※कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते※। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः प्रासादः। ※संख्यायाः नदीगोदावरीभ्याञ्च※। पञ्चनदम्। सप्तगोदावरम्। अजिति योगविभागादन्यत्रापि पद्मनाभः।

प्रति अनु अव पूर्वक सामन् एवं लोमन् शब्दान्त समास से अच् प्रत्यय होता है। प्रतिसामम्, यहां अव्ययीभाव समास, या प्रादिसमास या बहुव्रीहिसमास में अन्यतम समास है। इसी प्रकार अनु एवं सामादि में भी समझना चाहिए। कृष्ण, उदक्, पाण्डु एवं संख्या वाचक शब्द इनसे पर जो भूमि शब्द तदन्त समास से अच् प्रत्यय होता है। कृष्णा भूमिर्यत्र कृष्णभूमः। द्वे भूमी यत्र द्विभूमः प्रासादः = दो तल्ला मकान। संख्यापूर्वक नदी एवं गोदावरी तदन्त समास से अच् प्रत्यय होता है। पञ्चानां नदीनाम् समाहारः पञ्चनदम्। सप्तानां गोदावरीणां समाहारः सप्तगोदावरम्। सूत्र में अच् पृथक् सूत्र मान कर पूर्व उक्त स्थल से अन्यत्र में अच् प्रत्यय होता है। पद्मनाभः।

## ९४६ अक्ष्णोऽदर्शनात् ५।४।७६।

अचक्षुपर्यायाद् अक्ष्णोऽच् स्यात् समासान्तः। गवामक्षीव गवाक्षः।

चक्षुः के पर्य्याय वाचक जो अक्षि शब्द न हो वह उत्तरपदक समास से अच्प्रत्यय होता है गवामक्षीव गवाक्षः = वातायन में यह रूढ है। यहां व्यवस्थितविभाषा से अवङ् नित्य है। रोशनदान भाषा में इसका अर्थ है।

## ९४७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ५।४।७७।

एते पञ्चविंशतिरजन्ता निपात्यन्ते।

आद्यास्त्रयो बहुव्रीहयः। अविद्यमानानि चत्वार्यस्य अचतुरः। विचतुरः। सुचतुरः।※त्र्युपाभ्यां चतुरोऽजिष्यते※। त्रिचतुराः। चतुर्णां समीपे ये सन्ति ते उपचतुराः।तत एकादश द्वन्द्वाः। स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्। निपातनाट्टिलोपः।

पदष्ठीवम्। निपातनाद् पादशब्दस्य पद्भावः। नक्तञ्च दिवा च नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवम्। रात्रेर्मान्तत्वं निपात्यते। अहनि च दिवा च अहर्दिवम्। वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। सरजसमिति साकल्येऽव्ययीभावः। बहुव्रीहौ तु सरजः पङ्कजम्। निश्चितं श्रेयो निःश्रेयसम्। तत्पुरुष एव।

नेह—निश्रेयान् पुरुषः । पुरुषस्यायुः पुरुषायुषम् । ततो द्विगुः—द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः—ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः—जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपम् उपशूनम् । टिलोपाभावः सम्प्रसारणञ्च निपात्यते । गोष्ठे श्वा गोष्ठश्वः ।

अचतुरादि पचीस शब्द अच्प्रत्ययान्त निपातन से सिद्ध होते हैं । इनमें पहले तीन बहुव्रीहि है । अविद्यमानानि चत्वारि यस्य अचतुरः । विद्यमानानि अर्थ में विशब्द, शोभनानि अर्थ में सुशब्द से विचतुरः । सुचतुरः । त्रि एवं उपपूर्वक चतुर् शब्द को अच्प्रत्यय होता है । यथा त्रिचतुराः । चतुर्णाम् उप=समीपे ये ते इति उपचतुराः । इसके पश्चात् ग्यारह शब्दों में द्वन्द्व है । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् ।

यहां निपातन से टिलोप हुआ है । पादको निपातन से पदादेश पदष्ठीवम् में हुआ है । रात्रिन्दिवम् यहां निपातन से पूर्वपदको मान्तत्व है । वीप्सा अर्थ में द्वन्द्व निपातित है अहर्दिवम् । सरोजम् में साकल्प अर्थ में अव्ययीभाव है । बहुव्रीहि में यह अच्प्रत्यय नहीं करता है वहां सरजः पङ्कजम्' यही होता है । तत्पुरुष समास में हो निःश्रेयसम् होता है । अन्यसमास में निःश्रेयान् पुरुषः यहां बहुव्रीहि समास है । उपशुनम् यहां टिलोप का अभाव एवं संप्रसारण निपातित है । गोष्ठश्वः यहां अच्प्रत्यय एवं 'नस्तद्धिते' से अन् का लोप है ।

## ९४८ ब्रह्महस्तिभ्यां वर्चसः ५।४।७२।

अच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् । ॐपल्यराजभ्यां चेति वक्तव्यम्ॐ । पल्यवर्चसम् । राजवर्चसम् ।

ब्रह्मन् एवं हस्ति शब्द से पर वर्चस् शब्द तदन्त समास से अच् प्रत्यय समासान्त होता है । ब्रह्मणः = ब्राह्मणस्य वर्चः तेजः अर्थ में समास अच् प्रत्यय नपुंसकत्व विवक्षा में ब्रह्मवर्चसम् । पल्य एवं राजन् शब्द से पर वर्चस् शब्द तदन्त समास से अच् प्रत्यय होता है । पल्यवर्चसम् । राजवर्चसम् । पल शब्द मांस वाची है । पलम्=मासम् अर्हतीति पल्यः ।

## ९४९ अवसमन्धेभ्यस्तमसः ५।४।७९।

अवतमसम् । सन्तमसम् । अन्धयतीत्यन्धम्, पचाद्यच् । अन्धं तमः = अन्धतमसम् ।

अव, सम् अन्ध इन पूर्व में स्थित रहे वहां तमस् शब्दोत्तर समास को अच् प्रत्यय होता है । अन्ध दृष्ट्युपघाते धातु से 'पचादि' अच् प्रत्यय से यहां दृष्टि का उपघात करने वाला अर्थ अन्ध का है । अन्धम् तमः अन्धतमसम् ।

## ९५० श्वसो वसीयःश्रेयसः ५।४।८०।

वसुशब्दः प्रशस्तवाची तत ईयसुनि वसीयः । श्वस् शब्द = उत्तरपदार्थ-प्रशंसामाशीर्विषयतामाह । मयूरव्यंसकादित्वात् समासः । श्वोवसीयसम्= श्वः श्रेयसं ते भूयात् ।

वसु शब्द प्रशस्त वाचक है । उससे अतिशय अर्थ में ईयसुन् प्रत्यय टिलोप से वसीय की सिद्धि है । श्वस् शब्दार्थ यहां आशीर्वाद विषय जो उत्तर पदार्थ प्रशंसा उसका बोधक है । श्वस्

शब्द के उत्तर वसीयस् एवं श्रेयस् तदन्त समास को अच् प्रत्यय होता है। श्वोवसीयसम्। श्वःश्रेयसम्। यहां मयूर व्यंसकादि मान कर समास है।

## ९५१ अन्ववतप्ताद्रहसः ५।४।८१।

अनुरहसम्। अवरहसम्। तप्तरहसम्।

अनु, अव, तप्त इन शब्द पूर्व में रहे इनके पश्चात् रहस् शब्द तदन्त समास से अच् प्रत्यय होता है। रहः = अप्रकाश्य, अनुहीनम् अवहीनम् वा तमः अनुरहसम्। अवरहसम्। प्रादि समास है। अनुगतं रहः यस्मिन् यहां बहुव्रीहि भी सम्भव है।

दूसरे से अनधिगम्यम् = तप्तश्च तत् रहः तप्तरहसम्।

## ९५२ प्रतेरुरसः सप्तमीस्थात् ५।४।८२।

उरसि प्रति प्रत्युरसम्। विभक्त्यर्थेऽव्ययीभावः।

प्रतिपूर्वक सप्तम्यन्त उरस् शब्द के उत्तर समासान्त अच् प्रत्यय होता है। विभक्त्यर्थ में अव्ययीभाव, एवं अच् से प्रत्युरसम् = वक्षःस्थल में।

## ९५३ अनुगवमायामे ५।४।८३।

एतन्निपात्यते दीर्घत्वे। अनुगवं यानम्। यस्य चायाम इति समासः।

दीर्घ अर्थ होने पर अनुपूर्वक जो गोशब्द तदन्त समास को अच् प्रत्यय होता है। गोगत दीर्घ सम दीर्घतायुक्त यान = वाहन = अनुगवम्।

## ९५४ द्विस्तावा त्रिस्तावा वेदिः ५।४।८४।

अच्प्रत्ययष्टिलोपः समासश्च निपात्यते। यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाऽश्वमेधादौ तत्रेदं निपातनम्। वेदिरिति किम्, द्विस्तावती, त्रिस्तावती रज्जुः।

द्विस्तावत् एवं त्रिस्तावत् से समासान्त अच् प्रत्यय होता है एवं टिलोप भी निपातन से होता है। वेदि अर्थ में। याग दो प्रकार के हैं प्रकृति एवं विकृति, जहां साङ्गोपाङ्गविधिनिर्दिष्ट सम्पूर्ण है वह प्रकृति याग है, जहां कुछ अपूर्वविधि के बाद कह दिया गया है कि शेषविधि प्रकृति यागवत् वह विकृति याग हैं। प्रकृत में प्रकृति याग में जितनी बड़ी वेदि विहित है उससे दुगुनी या तिगुनी वेदि बड़ी अश्वमेधादि विकृति याग में बनानी चाहिये। वहां 'द्विस्तावा वेदिः' यहां अच् प्रत्यय एवं टिलोप हुआ है। इसी प्रकार त्रिस्तावा वेदिः। तद् वतुप् आत्व तावत्। वेदि से भिन्न में द्विस्तावती उगित् वतुप् होने से ङीप्।

## ९५५ उपसर्गादध्वनः ५।४।८५।

प्रगतोऽध्वानं प्राध्वो रथः।

प्र उपसर्ग से पर जो अध्वन् शब्द तदन्त समास से अचप्रत्यय समासान्त होता है। प्रगतोऽध्वानम् प्राध्वो रथः।

## ९५६ न पूजनात् ५।४।६९।

पूजनार्थात् परेभ्यः समासान्ता न स्युः। सुराजा। अतिराजा। ❀स्वतिभ्यामेव❀ परमराजः। पूजनात् किम्?, गामतिक्रान्तोऽतिगवः। बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवायं निषेधः। नेह—सुसक्थ्यः। स्वक्षः।

पूजनार्थक शब्द से पर स्थित जो शब्द तदन्त समास से समासान्त नहीं होता है। सुराजा में टच् न हुआ। अतिराजा में भी टच् का अभाव है। सु एवं अति से पर शब्द तदन्त से ही यह समासान्त प्रत्यय का निषेधक है। अन्यत्र नहीं। परमश्चासौ राजा यहां कर्मधारय में टच् होकर टिलोप से परमराजः। अति का जहां अतिशय अर्थ है वहां पूजा प्रतीयमान है एवं अतिक्रान्तार्थक अति जहां है यथा गाम् अतिक्रान्तः द्वितीयातत्पुरुष में वहां निषेध नहीं है, टच् हुआ अतिराजः। अतिगवः। यह निषेधक सूत्र की प्रवृत्ति 'बहुव्रीहौ सक्थ्यक्ष्णोः' के पूर्वसूत्र विहित समासान्त हुआ हो वहां ही है। स्वक्ष में अच् प्रत्यय हुआ।

### ९५७ किम् क्षेपे ५।४।७०।

क्षेपे यः किम् शब्दस्ततः परं यत् तदन्तात् समासान्ता न स्युः। कुत्सितो राजा किंराजा। किंसखा। किंगौः। क्षेपे किम् किंराजः। किंसखः। किंगवः।

निन्दार्थक किम् शब्द से पर जो शब्द तदन्त समास से समासान्त प्रत्यय नहीं होते हैं। किंराजा में टच् न हुआ। किंसखा में भी टच् का अभाव। किंगौः यहां भी टच् का अभाव प्रश्नार्थक किम् वहां समास में टच् एवं टिलोप किंराजः। किंसखः। किंगवः। इनमें पूर्व दो में 'राजाहः' से टच्, किंगवः 'गोरतद्धित' से टच् हुआ है।

### ९५८ नञस्तत्पुरुषात् ५।४।७१।

समासान्तो न। अराजा। असखा। तत्पुरुषात् किम्, अधुरं शकटम्।

नञ् तत्पुरुष समास से समासान्त प्रत्यय नहीं होते हैं। अधुरम् में बहुव्रीहि है, 'ऋक् पूरब्धू' से अप्रत्यय हुआ है।

### ९५९ पथो विभाषा ५।४।७२।

नञ्पूर्वात् पथो वा समासान्तः। अपथम्। अपन्थाः। तत्पुरुषादित्येव। अपथो देशः। अपथं वर्तते।

इति समासान्तप्रकरणम्।

नञ् पूर्वक पथिन् जो शब्द तदन्त समास से समासान्त प्रत्यय विकल्प से होते हैं। तत्पुरुष में ही इस सूत्र की प्रवृत्ति। अन्य समास में नहीं।

अविद्यमानः पन्थाः यस्मिन् देशे, स्थाने वा यहां नित्यसमासान्त अप्रत्यय हुआ है। यथा- अपथो देशः। अपथं स्थानं वर्तते।

पं० श्रीबा० कृ० पञ्चोलि विरचित रत्नप्रभामें समासान्त प्रकरण पूर्ण



# अथालुक्समासप्रकरणम् ॥ २२ ॥

## ९६० अलुगुत्तरपदे ६।३।१।

**अलुगधिकारः प्रागानङ्, उत्तरपदाधिकारस्त्वापादसमाप्तेः।**

'आनङ् ऋतो द्वन्द्वे' के पूर्व तक अलुक् का अधिकार है। एवं तृतीयपाद समाप्ति तक उत्तरपद का अधिकार है। यहाँ अलुक् में प्रसज्य प्रतिषेध है, 'सुपो धातुप्रातिपदिकयोः' से प्राप्त लुक् का निषेधक उत्तरसूत्र होते हैं। प्राप्ति का निषेध यह बोधनार्थ उत्तरोत्तर सूत्र में 'अलुक्' का सम्बन्ध करता है।

## ९६१ पञ्चम्याः स्तोकादिभ्यः ६।३।२।

**एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे । स्तोकान्मुक्तः। एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः। उत्तरपदे किम्, निष्क्रान्तः स्तोकान्निःस्तोकः ॐब्राह्मणाच्छंसिन उपसंख्यानम्ॐ ब्राह्मणो विहितानि शस्त्राणि उपचाराद् ब्राह्मणानि तानि शंसतीति ब्राह्मणाच्छंसी=ऋत्विग्विशेषः। द्वितीयार्थे पञ्चम्युपसंख्यानादेव।**

स्तोकादि शब्दों से पर पञ्चमी विभक्ति का लुक् नहीं होता है उत्तरपद पर रहते। यहां 'स्तोकान्तिकदूरार्थकृच्छ्रा'णि इस समास विधायक शास्त्रपठित ही स्तोकादि का ग्रहण होता है। 'करणे च स्तोकाल्पकृच्छ्र' का नहीं। समासत्व निबन्धप्रातिपदिक संज्ञा के अवयव सुप् का 'सुपोः' से प्राप्त लुक् का प्रतिषेध है, तकार को नकार अनुनासिक से है 'स्तोकान्मुक्तः' स्तोकान्मुक्तस्यापत्यम् स्तौकान्मुक्तिः। यह समास का फल है। एवं अन्तोदात्त एकपदत्वादि अनेक फल है, ऐसी परिस्थित में यहाँ समास असमास में विशेषता नहीं यह भ्रम न करना। अन्तिकान्मुक्तः। दूरान्मुक्तः। कृच्छान्मुक्तः। पञ्चमी तत्पुरुष में निःस्तोकः में उत्तरपद परक स्तोक नहीं प्रत्युत स्वयं स्तोक ही उत्तरपद है अतः यहाँ अलुक् न हुआ। ब्राह्मण से पर पञ्चमी का अलुक् शंसिन् उत्तरपद पर रहते होता है। ब्राह्मण ग्रन्थ में विहित शस्त्रों को भी लक्षणया ब्राह्मण ही कहकर उनका कथन कर्ता ऋत्विक् को ब्राह्मणाच्छंसी यहाँ पञ्चमी का लुक् न हुआ। यहाँ कथनकर्म ब्राह्मण है, अतः द्वितीया कर्मार्थक प्राप्त थी किन्तु पञ्चमी का अलुक् बोधन से यहाँ कर्त्रर्थक पञ्चमी ही हुई है, पञ्चमी का अर्थ द्वितीयार्थ ही होता है।

## ९६२ ओजः सहोऽम्भस्तमसस्तृतीयायाः ६।३।३।

**ओजसाकृतम्। ॐअञ्जस उपसंख्यानम्ॐ। अञ्जसाकृतम्=आर्जवेन कृतमित्यर्थः। ॐपुंसानुजो जनुषान्ध इति चॐ। यस्याग्रजः पुमान् स पुंसानुजः। जनुषान्धो जात्यन्धः।**

ओजस्, सहस्, अम्भस्, तमस् इनसे पर तृतीया का उत्तरपद पर रहते अलुक् होता। ओजसाकृतम्। सहसाकृतम्। अम्भसाकृतम्। तमसाकृतम्। कार्य्यम् यह विशेष्य है।

अञ्जस् शब्दोत्तर तृतीया का अलुक् होता है उत्तर पद पर रहते। सरलतापूर्वक सम्पन्न कार्य में अञ्जसाकृतम्। पुंस शब्द से पर तृतीया का अलुक् होता है अनुज उत्तरपद रहते।

एवं जनुष् से पर तृतीया का अलुक होता है अन्ध उत्तर पद पर रहते। जिसकी उत्पत्ति के पूर्व भ्राता ही उत्पन्न है वह पुंसानुजः है। जन्म से ही अन्ध वहाँ जनुषान्धः=जात्यन्धः।

## ९६३ मनसः संज्ञायाम् ६।३।४।

**मनसागुप्ता।**

समस्त शब्द से संज्ञा अर्थ की प्रतीति होती हो वहाँ उत्तरपद पर रहते मनस् शब्द से पर तृतीया का अलुक् रहता है।

## ९६४ आज्ञायिनि च ६।३।५।

**मनस इत्येव। मनसा आज्ञातुं शीलमस्य मनसाज्ञायी।**

आज्ञायिन् शब्द उत्तर पद पर रहते मनस् शब्द से पर तृतीया का लुक् नहीं होता है। वचन से नहीं केवल मन से आज्ञा देने का स्वभाव = प्रकृतियुक्त पुरुष को मनसाज्ञायी कहते है। इङ्गितमात्र से आज्ञापक।

## ९६५ आत्मनश्च ६।३।६२।

**आत्मनस्तृतीयाया अलुक् स्यात्। *पूरण इति वक्तव्यम्*। पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः। आत्मनापञ्चमः। 'जनार्दनस्त्वात्मचतुर्थ एव इति बहुव्रीहिर्बोध्यः। पूरणे किम्, आत्मकृतम्।**

आत्मन् से पर तृतीया का अलुक् है, पूरण प्रत्ययान्त उत्तरपद पर रहते। आत्मनापञ्चमः। आत्मा चतुर्थः यस्य यहाँ बहुव्रीहि है तृतीया का लुक् होता ही है। काशिका में सूत्र 'आत्मनश्च पूरणे' ऐसा है। स्वयंकृत अर्थ में आत्मकृतम्।

## ९६६ वैयाकरणाख्यायां चतुर्थ्याः ६।३।७।

**आत्मन इत्येव। आत्मनेपदम्। आत्मनेभाषा। तादर्थ्ये चतुर्थी। 'चतुर्थी' इति योगविभागात्समासः।**

व्याकरण सम्बन्धिनी संज्ञा में उत्तरपद पर रहते आत्मन् से उत्तर चतुर्थी का लुक् नहीं होता है। तादर्थ्य में चतुर्थी समास लुगभाव से आत्मनेपदम्। प्राचीन व्याकरण में आत्मनेभाषा यह भी संज्ञा है। यहां 'चतुर्थी तदर्थ' सूत्र में 'चतुर्थी' ऐसा योगविभाग से समास है।

## ९६७ परस्य च ६।३।८।

**परस्मैपदम्। परस्मैभाषा।**

व्याकरण की संज्ञा में उत्तरपद पर रहते पर से पर चतुर्थी का लुक् नहीं होता है, संज्ञा में। यथा-परस्मैपदम्, परस्मैभाषा।

## ९६८ हलदन्तात्सप्तम्याः संज्ञायाम् ६।३।९।

**हलन्ताददन्ताच्च सप्तम्या अलुक् संज्ञायाम। त्वचिसारः।**

हलन्त एवं ह्रस्व अकारान्त से पर सप्तमी का अलुक् संज्ञा में होता है। त्वचिसारः।

## ९६९ गवियुधिभ्यां स्थिरः ८।३।९५।

आभ्यां स्थिरस्य सस्य षः स्यात्। गविष्ठिरः। अत्र गवीतिवचनादेवालुक्। युधिष्ठिरः। अरण्येतिलकः। अत्र संज्ञायामिति सप्तमीसमासः। ॐहृद्द्युभ्यां चॐ। हृदिस्पृक्। दिविस्पृक्।

गवि और युधि इनसे पर स्थिर शब्द उसका सकार को षकारादेश होता है। गवि से पर स्थिर के सकार को षत्व विधान से ही गो शब्द से पर समासावयव सप्तमी का लुक् नहीं होता है ऐसा ज्ञापन करना। अन्यथा गो से पर ही स्थिर मिलेगा षत्व विधान व्यर्थ है। यद्यपि यहां पदद्वय सम्बन्धी समासत्व निबन्धन प्रातिपदिक निमित्तक लुक् बहिरङ्ग है अन्तरङ्ग अवादेश होकर गव् हलन्त है उससे पर इकार विभक्ति का है यहां 'हलदन्तात्'से अलुक् हो ही जाता पुनः गवीति वचनारम्भ से अपूर्व ज्ञापक का क्या उपयोग है ?, तथापि यहां अन्तरङ्ग परिभाषा की बाधक एक अन्य परिभाषा है, "अन्तरङ्गान् अपि विधीन् बहिरङ्गो लुक् बाधते' से अन्तरङ्ग कार्य अवादेश उसका अभाव से यहां गो ओकारान्त ही है, हलन्त नहीं।

यहां 'सात्पदाद्योः' से निषेध प्राप्त था, अतः इस सूत्र का आरम्भ किया है। युधिष्ठिरः। समास अलुक् षत्व ष्टुत्व है। अदन्त का उदाहरण—'अरण्येतिलकाः' समास अलुक्। यह किसी की संज्ञा है। हृद् एवं दिव् शब्द से पर सप्तमी का अलुक् होता है उत्तरपद पर रहते। हृदिस्पृक्। दिविस्पृक्।

## ९७० कारनाम्नि च प्राचां हलादौ ६।३।१०।

प्राचां देशे यत्कारनाम तत्र हलादौ उत्तरपदे हलदन्तात् सप्तम्या अलुक्। मुकुटेकार्षापणम्। दृषदिमाषकः। पूर्वेणैव सिद्धे नियमार्थम्। कारनाम्न्येव, प्राचामेव, हलादावेवेति। कारनाम्नि किम्, अभ्याहितपशुः। कारादन्यस्यैतद्देयस्य नाम। प्राचां किम्, यूथपशुः। हलादौ किम्, अविकटोरणः। हलदन्तात् किम्, नद्यां दोहो नदीदोहः।

वैश्य, पशुपालक, कृषक आदि से राजग्राह्य भाग को कारनाम कहते है। करोति=करः, पचाद्यच् करः एव कारः स्वार्थिक अण्, कारस्य नाम तस्मिन् कारनाम्नि। यहां कारे कहना था, 'संज्ञायाम् की अनुवृत्ति है नाम ग्रहण व्यर्थ है।

पूर्वदेश में जो कारनाम ( कर ) वहां हलादि उत्तरपद पर रहते हलन्त एवं अदन्त से पर सप्तमी का संज्ञा में अलुक् होता है। मुकुट धारण में कार्षापण द्रव्य दान की रीति कर रूप से देने की रही या संज्ञा में विभक्ति का अलुक् मुकुटेकार्षापणम्। दृषदिमाषकः। पूर्व से सिद्ध ही था यह नियमार्थ है, तीन नियम यहां होते है। १—हलन्त एवं अदन्त से पर सप्तमी का अलुक् होता है किन्तु यदि वह प्राचीन देश प्रसिद्ध कारनामक हलादि उत्तरपद पर में रहे तब ही।

'अभ्याहितपशुः' यहां लुक् होगा। क्योंकि यह कर से अन्य दान क्रिया कर्म = देय का नाम है। 'यूथपशुः' यह पूर्वदेश का राजदेय कर नहीं यहां लुक् हो जाता है। अवि से संघ अर्थ में कटच् प्रत्यय है। अविकटे उरणः = मेषः यहां अविकटोरणः उत्तरपद हलादि न होने से सप्तमी का लुक् हुआ है। नदीदोहः यहां सप्तमी का लुक् हुआ है, पूर्वपद ईकारान्त है।

## ९७१ मध्याद् गुरौ ६।३।११।

मध्येगुरुः। ॐअन्ताच्चॐ अन्तेगुरुः।

गुरु शब्द उत्तर में रहते मध्य एवं अन्त से पर सप्तमी का लुक् नहीं होता है।

## ९७२ अमूर्द्धमस्तकात्स्वाङ्गादकामे ६।३।१२।

कण्ठेकालः। उरसिलोमा। अमूर्द्धमस्तकात् किम्, मूर्द्धशिखः। मस्तकशिखः। अकामे किम्, मुखे कामोऽस्य मुखकामः।

मूर्द्ध एवं मस्तक से भिन्न स्वाङ्गवाचक से पर सप्तमी का अलुक् होता है काम से भिन्न उत्तरपद पर रहते।

## ९७३ बन्धे च विभाषा ६।३।१३।

हलदन्तात् सप्तम्या अलुक्। हस्तेबन्धः। हस्तबन्धः। हलदन्तात्' इति किम्, गुप्तिबन्धः।

बन्ध शब्द पर रहते हलन्त एवं अदन्त से पर सप्तमी का अलुक् विकल्प से होता है।

## ९७४ तत्पुरुषे कृति बहुलम् ६।३।१४।

स्तम्बेरमः। स्तम्बरमः। कर्णेजपः। कर्णजपः। क्वचिन्न, कुरुचरः।

तत्पुरुष समास में कृत् प्रत्ययान्त पर रहते बहुल सप्तमी का अलुक् होता है। बहुल से विकल्प एवं क्वचित् लुक् हो भी जाता है। विकल्पार्थ एवं अप्रवृत्त्यर्थक बहुल ग्रहण यहां है।

## ९७५ प्रावृट्शरत्कालदिवां जे। ६।३।१५।

प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यायं प्रपञ्चः।

कृत्प्रत्ययान्त ज उत्तरपद पर रहते प्रावृष्, शरत्, काल, दिव् इनसे पर सप्तमी का अलुक् होता है। यह पूर्वसूत्र का ही प्रपञ्च = स्पष्ट ज्ञानार्थ है। व्यर्थ है।

## ९७६ विभाषा वर्षक्षरशरवरात् ६।३।१६।

एभ्यः सप्तम्या अलुक् जे। वर्षेजः। वर्षजः। क्षरेजः। क्षरजः। शरेजः। शरजः। वरेजः। वरजः।

वर्ष, क्षर, शर, वर इन से पर सप्तमी का विकल्प से अलुक् होता है ज पर रहते।

## ९७७ घकालतनेषु कालनाम्नः ६।३।१७।

सप्तम्या विभाषा अलुक् स्यात्। घे—पूर्वाह्णेतरे। पूर्वाह्णतरे। पूर्वाह्णेतमे। पूर्वाह्णतमे। पूर्वाह्णेकाले। पूर्वाह्णकाले। तने—पूर्वाह्णेतने। पूर्वाह्णतने।

तरप् एवं तमप् की घ संज्ञा होती है अतः घपद से पूर्वोक्त दो प्रत्ययों का ग्रहण करना। घसंज्ञक, कालवाचक, एवं तन पर रहते सप्तमी का अलुक् होता है। ट्यु या ट्युल् प्रत्यय होकर तुट् आगम से 'तन' बनता है, सूत्र-'सायं चिरम्' है।

## ९७८ शयवासवासिष्वकालात् ६।३।१८।

खेशयः। खशयः। ग्रामेवासः। ग्रामवासः। ग्रामेवासी। ग्रामवासी। हलदन्तादित्येव भूमिशयः ॐअपोयोनियन्मतुषुॐ। अप्सु योनिः = उत्पत्तिर्यस्य सोऽप्सुयोनिः। अप्सु भवोऽप्सव्यः। अप्सु मन्तावाज्यभागौ।

यह पाठ हरदत्तानुसारी है, वार्तिक में मतिषु यह पाठ ही उचित है। शय, वास, वासिन्,

उत्तरपद पर रहते कालवाचक से भिन्न शब्द से पर सप्तमी का विकल्प से अलुक् होता है। पूर्वपद हलन्त या अदन्त रहे तब ही इस सूत्र की प्रवृत्ति होती है भूमिशय में लुक् हो गया। *योनि, यत्प्रत्यय, मतुप् प्रत्यय पर रहते अप् शब्द से पर सप्तमी का अलुक् होता है*। अप्सुयोनिः। यत् प्रत्यय—अप्सव्यः। ओर्गुण से गुण एवं अवादेश है। भवार्थक यत् प्रत्यय है। हविषान्न के भागद्वय अर्थ में अप्सुमन्तौ।

## ९७९ नेन्सिद्धबध्नातिषु च ६।३।१९।

इन्नन्तादिषु सप्तम्या अलुक् न। स्थण्डिलशायी। सांकाश्यसिद्धः। चक्रबन्धः।

इन् प्रत्ययान्त शब्द, सिद्धशब्द, एवं बन्धनार्थकबन्ध धातु निष्पन्न बन्ध पर रहते सप्तमी का अलुक नहीं होता है। अकृत्रिमभूमि को स्थण्डिल कहते हैं। संकाशदेशोद्भव को सांकश्य कहते हैं। चक्रबन्धः यहां तत्पुरुष है। बहुव्रीहि में तो बन्धे विभाषा से विकल्प लुक् से दो रूप होते हैं।

## ९८० स्थे च भाषायाम् ६।३।१९।

सप्तम्या अलुक् न। समस्थः। भाषायां किम्, कृष्णोऽस्याखरेष्ठः।

स्थ शब्द पर रहते लोक में सप्तमी का अलुक् नहीं होता है। अर्थात् लुक् होता है। समे तिष्ठति समस्थ, , 'सुपि स्थः' से कप्रत्यय आकारलोप उपपद समास सप्तमी का लुक् समस्थः। यह निषेध 'तत्पुरुषे कृति बहुलम्' का ही है, अनन्तरस्य न्याय से। अतः कण्ठेस्थः यहां अमूर्द्धमस्तकेति अलुक् हुआ, यह भाष्य प्रयोग है। 'अनेकम्' सूत्र पर भाष्यकार ने इसका उच्चारण किया है। भाषा कथन से वेदमन्त्र में अलुक् है। आखरेष्ठः।

## ९८१ षष्ठ्या आक्रोशे ६।३।२१।

चौरस्य कुलम्। आक्रोशे किम्, ब्राह्मणकुलम्। *वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु*। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः। *आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च*। अमुष्यापत्यम्—आमुष्यायणः। नडादित्वात् फक्। अमुष्य पुत्रस्य भावः—आमुष्यपुत्रिका। मनोज्ञादित्वाद् वुञ्। एवम् आमुष्यकुलिका। *देवानां प्रिय इति च मूर्खे*। अन्यत्र देवप्रियः। *शेषपुच्छलाङ्गूलेषु शुनः*। शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः। *दिवश्च दासे*। दिवोदासः।

निन्दा गम्यमान होने पर षष्ठी का अलुक् होता है। चौर का कुल से निन्दा की प्रतीति हुई। ब्राह्मणकुलम् यहां निन्दा नहीं विभक्ति का लुक् हो गया है। युक्ति, दण्ड, हर शब्द उत्तरपद रहते वाक्, दिक्, पश्यत् इनसे पर षष्ठी का अलुक् होता है। वाचोयुक्तिः = वचन का प्रामाण्य। दिशासम्बन्धी दण्डः दिशोदण्डः। पश्यत्=दृश् लट् शतृ पश्यादेश पश्यतोहरः। देखनेवाले का अनादर कर दिखते दिखते चुरा लेने वाला चौर। या स्वर्णकारादि। यह असत् पक्ष में उदाहरण है, 'षष्ठी चानादरे' से, षष्ठी विभक्ति यहां है।

आयनप्रत्यय, पुत्रिका, कुलिका, पर रहते अदस् शब्दोत्तर षष्ठी का अलुक्। अमुष्य स्वरूपस्थित रहता है। नडादि मानकर फक् उसको आयन्, आदि वृद्धि से आमुष्यायण की सिद्धि है। मनोज्ञादि मानकर वुञ् प्रत्यय आमुष्यपुत्रिका, वु को अक टाप् प्रत्ययस्थात् से इत्व है। इसी

प्रकार आमुष्यकुलिका यहां षष्ठी का अलुक् है। मूर्ख अर्थ में प्रिय उत्तरपद पर रहते देव से पर षष्ठी का लुक् नहीं होता है देवानां प्रियः। मूर्ख लोग देवप्रीति सम्पादनार्थ यत्न करते हैं, वह उनकी उपासना फलपरक होने से भवसागर में बन्धनरूप है। काम्यकर्म का निषेध परक यह वाक्य है। या बौद्धमत खण्डनार्थ प्रवृत्ति प्रसङ्ग में बौद्धों की निन्दार्थ प्रयुक्त है। बाह्य पूजा योगविद्या द्वारा आराधनापेक्षया अधम है।* शेष, पुच्छ, लाङ्गुल पर रहते श्वन् शब्द से पर षष्ठी का अलुक् होता है। शुनः शेपः। शुन इव शेपम् अस्य। शेपस् सकारान्त है ("गोलिङ्गचिह्नशेपसोः" यह अमरकोशकारोक्ति है। शुनः पुच्छम् यहां बहुव्रीहि है। यह तीनों ऋषिविशेष की संज्ञाएँ हैं। दास शब्द से पूर्व दिवस् शब्द की षष्ठी जो विभक्ति है उसका अलुक होता है। दिवोदासः।

## ९८२ पुत्रेऽन्यतरस्याम् ६।३।२२।

षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम्। दास्याःपुत्रः। दासीपुत्रः। निन्दायां किम्, ब्राह्मणीपुत्रः।

निन्दा अर्थ गम्यमान हो तो पुत्र शब्द पर रहते षष्ठीका अलुक् होता है।

## ९८३ ऋतो विद्यायोनिसम्बन्धेभ्यः ६।३।२३।

विद्यासम्बन्धयोनिसम्बन्धवाचिन ऋदन्तात् षष्ठ्या अलुक्। होतुरन्तेवासी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः। ❋विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्❋। नेह—होतृधनम्।

विद्यासम्बन्ध वाचक ऋकारान्त शब्द से पर षष्ठी का अलुक् होता है, विद्यासम्बन्ध या योनिसम्बन्ध वाचक शब्द ही उत्तरपद रहने चाहिये। पितृधनम् में उत्तरपद धन होने से यहाँ लुक् हो गया है।

## ९८४ विभाषा स्वसृपत्योः ६।३।२४।

ऋदन्तात् षष्ठ्या अलुक् वा स्वसृपत्योः परयोः।

ऋकारान्त शब्द से पर षष्ठी का अलुक् होता है स्वसृ या पतिशब्द पर में रहते।

## ९८५ मातुःपितुर्भ्यामन्यतरस्याम् ८।३।८५।

आभ्यां परस्य स्वसुः सस्य षो वा स्यात् समासे। मातुःष्वसा। मातुःस्वसा। पितुःष्वसा। पितुः स्वसा। लुक् पक्षे तु—

समास में मातुः एवं पितु शब्द से पर जो स्वसृशब्द है उसका सकार को विकल्प से षकार होता है।

## ९८६ मातृपितृभ्यां स्वसा ८।३।८४।

आभ्यां परस्य स्वसुः सस्य षः स्यात् समासे। मातृष्वसा। पितृष्वसा। असमासे तु मातुः स्वसा। पितुः स्वसा।

समास में मातृ एवं पितृ से पर स्वसृ के सकार को षकार होता है। असमास में नहीं। मातुः स्वसा = मौसी। पितुः स्वसा = पिता की बहन।

पं० श्री बा० कृ० पञ्चोलि विरचित रत्नप्रभा में अलुक् समास समाप्त

 

# अथ समासाश्रयविधिप्रकरणम् ॥ २३ ॥

## ९८७ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६।३।४३।

भाषितपुंस्काद् यो ङी तदन्तस्यानेकाचो ह्रस्वः स्याद् घरूपकल्पप्प्रत्ययेषु, चेलडादिषु चोत्तरपदेषु। ब्राह्मणितरा। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रेत्यादि। ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावोऽपि निपात्यते। चेलडादीनि वृत्तिविषये कुत्सनवाचीनि तैः 'कुत्सितानि कुत्सनैः' इति समासः। ङ्यः किम्, दत्तातरा। भाषितपुंस्कात्किम्, आमलकीतरा। कुवलीतरा।

घसंज्ञकप्रत्यय, रूपप्, कल्पप्, तथा चेलड्, ब्रुव, गोत्र, मत, हत, इतने शब्द पर रहते भाषितपुंस्क शब्दोत्तर जो ङी तदन्त जो अनेकाच् उसका ह्रस्व होता है। 'अतिशायने' सूत्र से तमप् प्रत्यय होता है, 'द्विवचनविभज्य' सूत्र से तरप्। तरप् तमप् की घसंज्ञा होती है, सूत्र–'तरप्तमपौ घः'। ब्राह्मण शब्द जातिवाचक से स्त्रीलिङ्ग में ङीष् अकारलोप से ब्राह्मणत्वजातिविशिष्टा स्त्री उसमें उत्कृष्टा दोनों में एक, ह्रस्व से ब्राह्मणितरा। अनेक में एक उत्कृष्टा स्त्री ब्राह्मणितमा। प्रशस्ता ब्राह्मणी ब्राह्मणिरूपा यहां प्रशंसायां रूपप् प्रत्यय है। ब्राह्मणिकल्पा में ह्रस्व है। ईषदसमाप्ति अर्थ में ईषद् असमाप्ता ब्राह्मणी। समासावयव चेलडादि निन्दार्थक है। नीचा ब्राह्मणी ब्राह्मणिचेली, 'टिड्ढाण्' से ङीप्। ब्राह्मणिब्रुवा। यहां अच्प्रत्यय है, वच् आदेश गुण का अभाव निपातन से है। यहां निन्दा में 'कुत्सितानि' सूत्र से समास है। दत्तातरा में ङ्यन्त नहीं, अतः ह्रस्वाभाव है, आमलकी शब्द नित्यस्त्रीलिङ्ग है, भाषितपुंस्क नहीं, अतः आमलकीतरा यहाँ ह्रस्व का अभाव है। इसी प्रकार कुवलीतरा में ही ह्रस्वाभाव है। इन दोनों शब्द वृक्षार्थक है।

## ९८८ नद्याः शेषस्यान्यतरस्याम् ६।३।४४।

अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात्। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरा। स्त्रितरा। स्त्रीतरा। ॐकृन्नद्या नॐ। लक्ष्मीतरा।

घ, रूप, कल्प, चेलड्, ब्रुव, गोत्र, मत, हत इन शब्दपर रहते अङ्यन्त नदीसंज्ञक का एवं ङ्यन्त एकाच् शब्द का विकल्प से ह्रस्व होता है। कृदन्त नदी संज्ञक का ह्रस्व नहीं होता है। लक्ष् से कृत ईप्रत्यय एवं मुट् आगम से लक्ष्मी शब्द सिद्ध है।

## ९८९ उगितश्च ६।३।४५।

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वाभावपक्षे तु तसिलादिष्विति पुंवत्, विद्वत्तरा। वृत्त्यादिषु 'विदुषीतरे'त्युदाहृतं तन्निर्मूलम्।

घादि पर रहते उगित् से पर जो नदी तदन्त का ह्रस्व विकल्प से होता है। 'यूस्त्र्याख्यौ' आदि नदी संज्ञा विधायक सूत्रों में दो पक्ष है, वर्ण संज्ञा पक्ष, एवं तदन्तसंज्ञा पक्ष है। वर्णसंज्ञा

पक्ष में ङीप् ङीष् ङीन् आदि का ईकार की नदी संज्ञा है। इस पक्ष का समाश्रय से यहाँ 'उगितः परा नदी' यह लिखा है। विद ज्ञाने से लट्, शतृ, वसु, वस् विद्वस् उगित्त्व से ङीप्, सम्प्रसारण, पूर्वरूप षत्व से विदुषी से अतिशयार्थक तरप् टाप् ह्रस्व विदुषितरा। ह्रस्व के अभाव में पुंवद् भाव से स्त्रीत्व प्रयुक्त ङीप् की निवृत्ति-विद्वत्तरा। विदुषीतरा यह तो अनुचित रूप है।

## ९९० हृदयस्य हृल्लेखयदण्लासेषु ६।३।५०।

हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्येदं हार्दम्। हृल्लासः। लेखेत्यणन्तस्य ग्रहणम्। घञि तु हृदयलेखः। लेखग्रहणमेव ज्ञापकम्—उत्तरपदाधिकारे तदन्तविधिर्नास्तीति।

लेखशब्द, यत्प्रत्यय, अणप्रत्यय, लास शब्द इन उत्तरपद में रहते हृदय को हृद् आदेश होता है। हृदय कर्म उपपद रहते अक्षरविन्यासार्थक लिख धातु से 'कर्मण्यण्' से अण् प्रत्यय लघूपध गुण, उपपद समास, हृदय को हृद् आदेश, परसवर्ण से हृल्लेखः। प्रिय अर्थ में यत् प्रत्यय हृदादेश से हृद्यम्। अण् प्रत्यय इदमर्थ में हृदादेश वृद्धि हार्दम्। हृल्लासः।

**विमर्श**—यहां लेख शब्द से अणन्त तदादि का ही ग्रहण है। घञन्त तदादि का नहीं है। लेख ग्रहण ही उत्तरपदाधिकारे परिभाषा में ज्ञापक है। अन्यथा अण् प्रत्यय से अणन्त-तदादि ग्रहण से कार्य निर्वाह होता पुनः सूत्र में लेख ग्रहण व्यर्थ है, वह ज्ञापन करता है कि उत्तरपद के अधिकार में प्रत्ययग्रहणे परिभाषा तदादि शब्द स्वरूप की उपस्थिति कर तदादि विशेष्य प्रत्यय विशेषणक तदन्त विधि नहीं कहती है, अतः अण्रूप उत्तरपद ही अर्थ होकर हृल्लेखः में अण् से कार्य निर्वाह नहीं होता एतदर्थ लेख ग्रहण स्वांश में चरितार्थ हुआ।

परिभाषा का स्वरूप—"उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्"। इसमें लेख ग्रहण ज्ञापक है। लेखान्त उत्तर पद अर्थ यहां नहीं है "उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्त—ग्रहणम्" से उत्तरपद विशेष्य प्रातिपदिक विशेषणक तदन्तविधि नहीं होती है, अतः लेखान्त उत्तरपद परमलेख पर में रहते हृद् आदेशार्थ लेख है यह नहीं कह सकते हैं, लेख ग्रहण ज्ञापक है इसको भाष्यकार भी मानते है, "यदयं लेखग्रहणं करोति तत् ज्ञापयति-आचार्य उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणमिति" यह भाष्यानुपूर्वी लब्धार्थ है। तेन अण् स्वरूप का ही बोधक है, अणन्त अर्थ का बोधक नहीं है।

## ९९१ वा शोकष्यञ्रोगेषु ६।३।५१।

हृच्छोकः। हृदयशोकः। सौहार्द्यम्। सौहृदयम्। हृद्रोगः। हृदयरोगः। हृदयपर्यायो हृच्छब्दोऽप्यस्ति। तेन सिद्धे प्रपञ्चार्थमिदम्।

शोक, ष्यञ्प्रत्यय, रोग इन शब्दों के उत्तरपद पर रहते हृदय शब्द के स्थान में हृद् आदेश विकल्प से होता है। हृदय का समानार्थक हृद् शब्द है पुनः यह सूत्र स्पष्टार्थ है अर्थात् अनावश्यक है। पारायण जन्य अदृष्टमात्र फलार्थ है. जिस क्रम से आचार्य ने अष्टाध्यायी का निर्माण किया उसका आदितः अन्त तक अध्ययन रूप पारायण से अदृष्ट सिद्धि होती है, दृष्ट फल, अदृष्ट फल दृष्ट अदृष्ट उभय फलों में उत्तम दृष्ट फल पूर्वक अदृष्ट फल है।

## ९९२ पादस्य पदाज्यातिगोपहतेषु ६।३।५२।

एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात्। पदाभ्यामजतीति पदाजिः। पदातिः। अज्यतिभ्यां पादे चेतीण् प्रत्ययः। अजे र्व्यभावो निपातनात्। पदगः। पदोपहतः।

आजि, आति, ग, उपहत इन पर रहते पाद को पद आदेश होता है। पादाभ्याम् अजति = गच्छति अर्थ में अज् से इण प्रत्यय उपधावृद्धि से आजि = गमनकर्ता, पाद के अकारान्त पद आदेश दीर्घ पदाजिः। पादाभ्याम् अततीति पदातिः। अज् के स्थान में वि आदेश प्राप्त था उसका अभाव निपातन से हुआ है। पदाभ्यां गच्छति पदगः। पादाभ्याम् उपहतः पदोपहतः।

## ९९३ पद्यत्यतदर्थे ६।३।५३।

पादस्य पत् स्यादतदर्थे यति परे। पादौ विध्यन्ति इति पद्याः शर्कराः। अतदर्थे किम्, पादाभ्यामुदकं पाद्यम्। पादार्घाभ्यां चेति यत्। ॐइके चरतावुपसंख्यानम्ॐ। पादाभ्यां चरति पदिकः। पर्पादित्वात् ष्ठन्।

अतदर्थक यत प्रत्यय पर रहते पाद शब्द को यत आदेश होता है। तदर्थक यत में पदादेश का अभाव है। 'विध्यत्यधनुषा से यत प्रत्यय पदादेश पद्याः शर्कराः = कंकण। पाद से तदर्थ अर्थ में यत, अकार लोप पाद्यम् = पैर धोने के लिये जल। *'चरति' = गच्छति अर्थ में विहित यत प्रत्यय पर रहते पाद को पत आदेश होता है। पाद भ्याम् से ष्ठम् विभक्तिलोप इकादेश पदादेश पदिकः = पैर से गमन कर्ता।

## ९९४ हिमकाषिहतेषु च ६।३।५४।

पद्धिमम्। पत्काषी, पद्धतिः।

हिम, काषि, हत पर रहते पाद को पदादेश होता है। पत्काषी णिनि प्रत्ययान्त काषी है, 'सुप्यजातौ' से णिनि। पद्धतिः = पादाभ्यां हन्यते यः सः मार्ग। हन् धातु से कर्मार्थक क्तिन् प्रत्यय है।

## ९९५ ऋचः शे ६।३।५५।

ऋचः पादस्य पत्स्याच्छे परे। गायत्रीं पच्छः शंसति, पादम्पादमित्यर्थः। ऋचः किम्, पादशः कार्षापणं ददाति।

श पर रहते मन्त्र सम्बन्धी पाद को पदादेश होता है। लोमादि से विहित शस् को 'शे' अनुकरण है यह कहना उचित नहीं है लोमादि में पाद का पाठ नहीं है। अत शस् प्रत्यय का अनुकरण है, 'शे' पच्छः पादं पादं शंसति = एक एक करके पढता है। मन्त्र सम्बन्धी भिन्न में पादशः। 'संख्यैकवचनाश्च' सूत्र से शस् प्रत्यय यहां होता है।

## ९९६ वा घोषमिश्रशब्देषु ६।३।५६।

पादस्य पत्। पद्घोषः। पादघोषः। पन्मिश्रः। पादमिश्रः। पच्छब्दः। पादशब्दः। ॐनिष्के चेति वाच्यम्ॐ। पन्निष्कः। पादनिष्कः।

घोष, मिश्र, शब्द इनके पर रहते पादको पत आदेश विकल्प से होता है। निष्कशब्द पर रहते भी पादको पदादेश होता है।

## ९९७ उदकस्योदः संज्ञायाम् ६।३।५७।

**उदमेधः । ॐउत्तरपदस्येति वक्तव्यम्ॐ । क्षीरोदः ।**

संज्ञा में पूर्वपदस्थ उदक शब्द को उदादेश होता है। उदकमेघः = उदमेघः। सादृश्य से यह पुरुष की संज्ञा है। क्षीरम् उदकं यस्य क्षीरोदः। यहां उत्तरपदस्थ उदक को भी उदादेश वार्तिक मत से हुवा है। समुद्र की संज्ञा है।

## ९९८ पेषं वासवाहनधिषु च ६।३।५८।

**उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः। समुद्रे तु पूर्वेण सिद्धम्।**

णमुल्प्रत्ययान्त पेशम्, वास, वाहन, किप्रत्ययान्त धि, इन उत्तर पद रहते उदक को उदादेश होता है। पिष धातु का अर्थ है अवयवों को चूर्ण युक्त करना = पिसना। उदकम् पिनष्टि अर्थ में 'स्नेहने पिषः' से णमुल् प्रत्यय है। उदक को उदादेश हैं। उदके वासो यस्य उदकवासः। उदकस्य वाहनं यस्य उदवाहनः। उदकं धीयतेऽस्मिन् उदधिः किप्रत्यय अधिकरण में 'कर्मण्यधिकरणे च' से हुआ है। उदधिः = समुद्र इस अर्थ में तो संज्ञा में पूर्व सूत्र से ही सिद्ध है।

## ९९९ एकहलादौ पूरयितव्येऽन्यतरस्याम् ६।३।५९।

**उदकुम्भः। उदककुम्भः। एकेति किम्, उदकस्थाली। पूरयितव्येति किम्, उदकपर्वतः।**

पूरयितव्य अर्थ में एक हल्मात्र आदि में रहते उदक को उदादेश विकल्प से होता है। उदकुम्भः। यहां भरने योग्य घड़ा है, जल से भरने योग्य घड़ा। पर्वत पूरयितव्य नहीं है अतः उदकपर्वतः।

## १००० मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ६।३।६०।

**उदमन्थः। उदकमन्थः। उदौदनः। उदकौदनः।**

मन्थ, ओदन, सक्तु, बिन्दु, वज्र, भार, हार, वीवध, गाह इन शब्द उत्तरपद पर रहते उदक को उदादेश विकल्प से होता है। मथन करने का दण्ड को मन्थ कहते है। 'मन्थो मन्थनदण्डश्च'।

## १००१ इको ह्रस्वोऽङ्यो गालवस्य ६।३।६१।

**इगन्तस्य ङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे। ग्रामणिपुत्रः। ग्रामणीपुत्रः। इकः किम्, रमापतिः। अङ्य इति किम्, गौरीपतिः। गालवग्रहणं पूजार्थम्, अन्यतरस्यामित्यनुवृत्तेः। ॐइयङुवङ्भाविनामव्ययानां च नेति वक्तव्यम्ॐ। श्रीमदः। भ्रूभङ्गः। शुक्लीभावः। ॐभ्रूकंसादीनामिति वक्तव्यम्ॐ। भ्रूकंसः, भ्रूकुटिः। भ्रुकंसः। भ्रुकुटिः। अकारोऽप्यनेन विधीयते इति व्याख्यान्तरम्। भ्रकंसः। भ्रकुटिः। भ्रुवा कंसो भाषणं शोभा वा यस्य सः स्त्रीवेशधारी नर्तकः। भ्रुवः कुटिः = कौटिल्यम्।**

इगन्त जो अङ्यन्त उसका ह्रस्व विकल्प से होता है, उत्तर पद पर रहते। ग्रामणिपुत्रः। पक्ष में ग्रामणीपुत्रः। रमापति यहां पूर्वपद इगन्त नहीं है। गौरीपति में पूर्वपद ङ्यन्त है। गालव ग्रहण यहां प्रशंसार्थ है, क्योंकि अन्यतरस्याम् की अनुवृत्ति पूर्वसूत्र से होकर विकल्प का लाभ है। *इयङ् उवङ् स्थानी का तथा अव्यय के अन्त्य अच् का ह्रस्व नहीं होता है। श्रिया मदः—श्रीमदः। भ्रुवः भङ्गः—भ्रूभङ्गः। अशुक्लं शुक्लं भवतीति शुक्लीभावः यहां च्व्यन्त अव्यय है अतः ह्रस्व न हुआ। *भ्रूकंसादि शब्दों में ह्रस्व का निषेध की प्रवृत्ति नहीं अर्थात् ह्रस्व विकल्प होता ही है। अतः भ्रुकंसः भ्रूकंस रूप द्वय हैं। भ्रुकुटिः भ्रूकुटिः। यहां अकार का विधानक भी है इस अन्यव्याख्या मत में भ्रकंसः। भ्रकुटिः। भौंवो के इशास से कथनीय भावो को व्यक्त करने वाला स्त्रीवेश को धारण कर्ता नट विशेष। कुटिः का अर्थ वक्रता = कुटिलता।

## १००२ एकतद्धिते च ६।३।६२।

**एकशब्दस्य ह्रस्वः स्यात् तद्धिते उत्तरपदे। एकस्या आगतम् एकरूप्यम्। एकक्षीरम्।**

तद्धित प्रत्यय पर रहते एक शब्द का ह्रस्व होता है। एकशब्द स्वतः ह्रस्वान्त है, अतः एका शब्दान्त का ह्रस्वोदाहरण है। यहां एकस्या आगतम् एकरूप्यम। एकस्याः क्षीरम = एकक्षीरम्।

## १००३ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ६।३।६३।

**रेवतिपुत्रः। अजक्षीरम्।**

ङी एवं आप् तदन्त का संज्ञा या छन्द में ह्रस्व होता है विकल्प से। रेवत्याः पुत्रः रेवतिपुत्रः। अजायाः क्षीरम् अजक्षीरम्।

## १००४ त्वे च ६।३।६४।

**त्वे प्रत्यये ङ्यापोर्वा ह्रस्वः। अजत्वम्। अजात्वम्। रोहिणित्वम्। रोहिणीत्वम्।**

ङ्यन्त एवं आबन्त का ह्रस्व विकल्प से होता है।

## १००५ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ६।१।१३।

**ष्यङन्तस्य पूर्वपदस्य सम्प्रसारण स्यात् पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे।**

तत्पुरुषसमास में पुत्र एवं पति उत्तर पद रहते ष्यङन्त का सम्प्रसारण होता है।

## १००६ सम्प्रसारणस्य च ६।३।१३९।

**सम्प्रसारणस्य दीर्घः स्यादुत्तरपदे। कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। व्यवस्थितविभाषया ह्रस्वो न, 'स्त्रीप्रत्यये चानुपसर्जने न' इति तदादिनियमप्रतिषेधात्। परमकारीषगन्धीपुत्रः। उपसर्जने तु तदादि-नियमान्नेह—अतिकारीषगन्ध्यापुत्रः।**

सम्प्रसारण का दीर्घ होता है उत्तरपद पर रहते। कुमुदस्य गन्ध इव गन्धो यस्य = कुमुदगन्धिः यहां समासान्त इकारादेश है। कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या 'तस्यापत्यम्' से अण् प्रत्यय करके 'अणिञोः' से ष्यङादेश है। 'यङश्चाप्' से चाप् स्त्री प्रत्यय है।

कौमुदगन्ध्यायाः पुत्रः यहां 'ष्यङः' से सम्प्रसारण, पूर्वरूप दीर्घ कौमुदगन्धीपुत्रः। इसी प्रकार कौमुदगन्धीपतिः। इन दोनों स्थलों में 'इको ह्रस्वोऽङ्योर्गालवस्य' से ह्रस्ववैकल्पिक होना चाहिये। ह्रस्वाभावपक्ष में दीर्घ विधान सावकाश है, अतः व्यवस्थितविभाषा मानकर यहां ह्रस्व का सदा अभाव ही रहता है।

**विमर्श**—परमा चासौ कारीषगन्ध्या तस्याः पुत्र यहां परमकारीषगन्ध्या ष्यङन्त तदादि नही है, 'प्रत्ययग्रहणे' परिभाषा से तदादि विशेष्य ष्यङ् विशेषणक तदन्तविधि से 'ष्यङन्ततदादि' अर्थ होता है किन्तु "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इसी परिभाषा की बाधिका परिभाषा है—'स्त्रीप्रत्यये चानुपसर्जने न' स्त्रीरूपार्थ बोधक प्रत्यय स्त्रीरूप अर्थ को प्रधान रूप से बोधन करता है वहां तदादि की उपस्थिति नहीं होती है अर्थात् तदादि विशेष्यक तदन्त विधि नहीं है। वहां ष्यङन्त पूर्वपद यही अर्थ होता है अनुपसर्जन में सम्प्रसारण करने वाले 'ष्यङः' सूत्र का एवं उपसर्जन में सम्प्रसारण करने वाला 'ष्यङ' सूत्र का अर्थ—ष्यङन्त तदादि का अवयव निर्दिश्यमानावयव ष्यङ् का सम्प्रसारण होता है। एक अनुपसर्जनार्थ सूत्र है। परमकारीषगन्ध्या यहां परमपदोत्तर टाबन्त परमा का 'पुंवत्कर्मधारय' से पुंवद्भाव हुआ है, उससे टाप् की निवृत्ति स्त्रीत्वविशिष्ट उत्कृष्टगुणाश्रय से अभिन्न स्त्रीत्व विशिष्ट करीषगन्धिसम्बन्धि स्त्रीत्वविशिष्टापत्यपुत्रः, । यह अर्थ परमकारीषगन्धीपुत्र का है। यहां ष्यङ् अनुपसर्जन है, अतः ष्यङन्तपूर्वपदमात्र अर्थ है। सम्प्रसारण हुआ है। 'अतिकारीषगन्ध्यापुत्रः' यहां अर्थ यह है—करीषगन्धिसम्बन्धि-स्त्रीत्वविशिष्टअपत्यकर्मक अतिक्रमणकर्त्री का पुत्र। यहां अत्यर्थः = अतिक्रमणकर्त्री विशेष्य है, उसमें विशेषण कारीषगन्ध्या पदार्थ = करीष गन्धिसम्बन्धि स्त्रीत्वविशिष्ट अपत्य है प्रकारता अपत्य में तन्निरूपता अवच्छेदकता = प्रकारतावच्छेदकता स्त्रीत्व में है। ष्यङ उपसर्जन है अतः ष्यङन्त तदादि अतिकारीषगन्ध्या नहीं है यहां सम्प्रसारणाभाव है। उपसर्जनत्वञ्च—स्वान्त-पर्य्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वम्। स्व पद से जिसको उपसर्जन बनाना है वह लेना। यथा प्रकृत ष्यङ्। परिष्कार में प्रकारता अभेद सम्बन्धातिरिक्ता लेनी चाहिये।

## १००७ बन्धुनि बहुव्रीहौ ६।१।१४।

**बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसारणं स्याद् बहुव्रीहौ। कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः। बहुव्रीहाविति किम्, कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया। ॐमातज्मातृक-मातृषु वा ॐ। कारीषगन्धीमातः। कारीषगन्ध्यामातः। कारीषगन्धीमातृकः। कारीषगन्ध्यामातृकः। कारीषगन्ध्यामाता। अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः, कब् विकल्पश्च। बहुव्रीहावेदेम्, नेह—कारीषगन्ध्याया माता कारीषगन्ध्यामाता। चित्त्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते।**

बहुव्रीहिसमास में बन्धु शब्द उत्तरपद रहते ष्यङ्प्रत्ययान्त का सम्प्रसारण होता है। बहुव्रीहि कथन से षष्ठीतत्पुरुष में इसकी प्रवृत्ति नहीं है। सूत्र में 'बन्धौ' चाहिये किन्तु शब्दस्वरूप विशेष्य मानकर विशेष्यगत नपुंसक से 'बन्धुनि' निर्देश सूत्र में है।

मातज्, मातृक, मातृ शब्द पर रहते विकल्प ष्यङ् प्रत्ययान्त का सम्प्रसारण होता है। इस निपातन के कारण मातृशब्द को मातच् आदेश एवं कप् विकल्प होता है। मातच मे चकार की इत्संज्ञा होने के कारण यह चितः अन्तोदात्त स्वर 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' को बाध करता है।

## १००८ इष्टकेषीकामालानां चिततूलभारिषु ६।३।६५।

इष्टकादीनां तदन्तानाञ्च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात्। इष्टकचितम्। पक्वेष्टकचितम्। इषीकतूलम्। मुञ्जेषीकतूलम्। मालभारी। उत्पलमालभारी।

इष्टका, इषीका एवं माला, वे जिनके अन्त में है उनका क्रमशः चित, तुल एवं भारिन् उत्तरपद पर रहते ह्रस्व होता है। यथा इष्टकाभिः चितम् = इष्टकचितम्। पक्वाश्च ते इष्टकाः ताभिः चितम् पक्वेष्टकचितम्। इषीकायाः तूलम् इषीकतुलम्। मुञ्जेषीकतुलम्। मालभारी, उत्पलमालभारी यहां भारिन् 'सुप्यजातौ' से णिनि प्रत्ययान्त है मालां बिभर्ति मालभारी। पद एवं अङ्ग के अधिकार मे विहित कार्य उनको या वे अन्त में रहे उनको होता है।

## १००९ कारे सत्यागदस्य ६।३।७०।

मुम् स्यात्। सत्यङ्कारः। अगदङ्कारः। ❀धेनोर्भव्यायाम्❀। धेनुम्भव्या। ❀लोकस्य पृणे❀ लोकम्पृणः। पृण इति मूलविभुजादित्वात्कः। ❀इत्येऽनभ्यासस्य❀। अनभ्यासमित्यः=दूरत; परिहर्तव्य इत्यर्थः। ❀भ्राष्ट्राग्न्योरिन्धे❀। भ्राष्ट्रमिन्धः। अग्निमिन्धः। ❀गिलेऽगिलस्य❀। तिमिङ्गिलः। अगिलस्य किम्, गिलगिलः। ❀गिलगिले च❀। तिमिङ्गिलगिलः। ❀उष्णभद्रयोः करणे❀। उष्णङ्करणम्। भद्रङ्करणम्।

सत्य एवं अगद को कारशब्द पर रहते मुम् आगम होता है। प्रतिज्ञा द्वारा सत्य सिद्ध करने वाला = सत्यंकारः। रोगरहित करने वाला को अगदङ्कारः = चिकित्सकः। कार पर रहते अस्तु को मुम् आगम होता है—अस्तुङ्कारः = ऐसा होने दो ऐसा कहने वाला। धेनु को मुम् होता है भव्या उत्तर में रहते। धेनु में श्रेष्ठ धेनुम्भव्या। लोक को मुम् होता है कप्रत्ययान्त पृण पर रहते। पूरण कर्ता = पृण का अर्थ है। लोगों को प्रसन्न कर्ता है, लोकम्पृणः। इत्य पर रहते अनभ्यास को मुम् होता है। अनभ्यासम् इत्यः [दूर रखने योग्य व्यक्ति। भ्राष्ट्र एवं अग्नि को मुम् होता है, इन्ध पर रहते। भरसाई को तेजोयुक्त करने वाला भ्राष्ट्रमिन्धः। अग्नि को प्रकाश युक्त करने वाला अग्निमिन्धः। अगिल को मुम् होता है गिल पर रहते। तिमिङ्गिलः। मत्स्यविशेष। गलगिलः यहाँ पूर्व पद अगिल नहीं है। गिलं गिलति। कप्रत्यय अचि विभाषा से लत्वविकल्प। गिलगिल उत्तर पद रहते अगिल को मुम् होता है। यथा तिमेः गिलगिलः—तिमिङ्गिलगिलः। उष्ण एवं भद्र को मुम् होता है करण पर रहते। उष्णङ्करणम्। भद्रङ्करणम्।

## १०१० रात्रेः कृति विभाषा ६।३।७२।

रात्रिञ्चरः। रात्रिचरः। रात्रिमटः। रात्र्यटः। अखिदर्थमिदं सूत्रम्। खिति तु अरुर्द्विषदिति नित्यमेव वक्ष्यते। रात्रिम्मन्यः।

कृत्यप्रत्ययान्त उत्तर पद रहते रात्रिशब्द को मुम् आगम होता है विकल्प से। अधिकरण उपपद में रहते चर् धातु से ट प्रत्यय 'चरेष्टः' सूत्र से होता है। उपपदसमास, मुम् से रात्रिञ्चरः = राक्षसः। रात्रिचरः। रात्रिमट आदि। अरुर्द्विषद् सूत्र खिदन्त उत्तरपदे पर रहते मुम् करता है यह अखिदन्तोत्तरपदार्थक है। 'रात्रिम्मन्यः' यहाँ अरुर्द्विष से नित्य मुम् है। यद्यपि लेखग्रहण ज्ञापित

उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तस्य ग्रहणम्' से कृद्रूप उत्तरपद अर्थ होना चाहिये, किन्तु यह अर्थ न हुआ। क्योंकि रात्रि से पर कृद्रूप उत्तरपद असम्भव है इस लिए इस सूत्रारम्भ सामर्थ्य से वह परिभाषा यहां अनित्यत्व के कारण नहीं लगती है।

## १०११ सहस्य सः संज्ञायाम्। ३।६।७८।

उत्तरपदे। सपलाशम्। संज्ञायां किम् सहयुध्वा।

संज्ञा गम्यमान रहने पर सह को स आदेश होता है।

## १०१२ ग्रन्थान्ताधिके च ६।३।७९।

अनयोरर्थयोः सहस्य सः स्यादुत्तरपदे। समुहूर्तं ज्योतिषमधीते। सद्रोणा खारी।

ग्रन्थान्त तथा अधिक अर्थ में उत्तरपद पर रहते सह को स आदेश होता है। अन्तवचन में अव्ययीभावसमास सह को स आदेश समुहूर्तम्। 'अव्ययीभावे चाकाले' से अप्राप्त है अतः ग्रन्थान्त ग्रहण यहाँ किया है। अधिकार्थ में सद्रोणा।

## १०१३ द्वितीये चानुपाख्ये।

अनुमेये द्वितीये सहस्य सः स्यात्। सराक्षसीका निशा। राक्षसी साक्षाद-नुपलम्भमाना निशयाऽनुमीयते।

अप्रधान जो उसको लोक में द्वितीय कहते हैं। उपाख्य प्रत्यक्ष को कहते हैं। तद्भिन्न को अनुमेय = अनुमान कर्म कहते हैं। अनुमेय द्वितीय में सह को स आदेश होता है। 'नद्यृतश्च' से कप्प्रत्ययान्त सराक्षसीका है। भयानक सघन तिमिरयुक्तरात्रि से राक्षसी का अनुमान होता है ऐसी रात्रि।

## १०१४ समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ६।३।८०।

समानस्य सः स्यादुत्तरपदे, न तु मूर्द्धादिषु। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्यः। तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यत्। अमूर्द्धादिषु किम्, समानमूर्द्धा। समानप्रभृतयः। समानोदर्काः। समानस्येति योगो विभज्यते। तेन सपक्षः। साधर्म्यम्। समानजातीयम् इत्यादि सिद्धमिति काशिका। अथवा सहशब्दः सदृशवचनोऽस्ति। सदृशः सख्या ससखीति यथा। तेनायमस्वपदविग्रहो बहुव्रीहिः। समानः पक्षो यस्येत्यादि।

वेद में उत्तरपद पर रहते समान को स आदेश होता है, परन्तु मूर्द्ध प्रभृति एवं उदर्क पर रहते समान को सादेश नहीं होता है। एक माता के गर्भ से उत्पन्न भ्राता अर्थ में समानगर्भोद्भव यहां 'सगर्भ' सूत्र से यत् प्रत्यय है। समानगर्भः = सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्यः। तत्र भव अर्थ में 'सगर्भसयूथसनुत' से यत् प्रत्यय है अमूर्द्धादिपर्युदास से समानमूर्द्धा आदि। यहां समानस्य यह भिन्न सूत्र है इससे सपक्षः आदि की सिद्धि हुई यह काशिकाकार का मत है। अथवा सदृशवाची सह शब्द है। समानः पक्षः यस्य इति सपक्षः।

**१०१५ ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ६।३।८५।**

एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात्। सज्योतिः। सजनपदः। इत्यादि।

ज्योतिः आदि बारह शब्द उत्तरपद रहते समान को स आदेश होता है। समानज्योतिः सज्योतिः। आदि।

**१०१६ चरणे ब्रह्मचारिणि ७।३।८७।**

ब्रह्मचारिण्युपपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने। चरणः = शाखा। ब्रह्म = वेदः। तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति ब्रह्मचारी। समानः सः सब्रह्मचारी।

ब्रह्मचारिन् उत्तर पद पर रहते समान को स आदेश होता है, समानरूप से वेद की शाखा गम्यमान रहते। चरण से शाखा का ज्ञान करना। ब्रह्म से वेद का ज्ञान करना। वेदाध्ययन के लिये व्रत को भी ब्रह्म कहते हैं। 'ब्रह्म चरति' इस वाक्य में 'व्रते' सूत्र से णिनि प्रत्यय है, समानो ब्रह्मचारी सब्रह्मचारी। ब्रह्मचारी का समानत्व ब्रह्म के समान होने से सिद्ध है। समाने ब्रह्मणि व्रतचारी।

**१०१७ तीर्थे ये ६।३।८७।**

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात्। सतीर्थ्यः = एकगुरुकः। समानतीर्थे वासीति यत्प्रत्ययः।

तीर्थ शब्द उत्तर में रहे यकारादि प्रत्यय विवक्षित हो तो समान को स आदेश होता है। य में अकार उच्चारणार्थक है, प्रत्यय विशेष्यक तदादि विधि है—यादौ में। तीर्थम् = गुरुकुलम् समाने तीर्थे वसति सतीर्थ्यः। यत् प्रत्यय है। एक है गुरु जिनके ऐसे छात्र परस्पर 'सतीर्थ्यः' कहाते हैं।

**१०१८ विभाषोदरे ६।३।८८।**

यादौ प्रत्यये विवक्षिते इत्येव। सोदर्यः! समानोदर्यः।

यादि प्रत्यय विवक्षित होने पर उदर पर रहते समान को सादेश होता है। समान उदर में शयित अर्थ में समानोदर से यत्, सादेश अकारलोप सोदर्य्यः। सादेश के अभाव में समानोदर्य्यः।

**१०१९ दृग्दृशवतुषु ६।३।८९।**

सदृक्, सदृशः। ॐ दृक्षे चेति वक्तव्यम् ॐ। सदृक्षः। वतुरुत्तरार्थः।

दृक् एवं दृश एवं दृक्ष उत्तरपद पर रहते समान को स आदेश होता है। इस सूत्र में वतुग्रहण उत्तरार्थ है।

**१०२० इदंकिमोरीश्की ६।४।९०।**

दृग्दृशवतुषु इदम ईश् किमः की स्यात्। ईदृक्, ईदृशः। कीदृक्, कीदृशः। वतुरुदाहरणं वक्ष्यते। ॐ दृक्षे चेति वक्तव्यम् ॐ। ईदृक्षः। कीदृक्षः।

**आ सर्वनाम्नः । इद्वे च । तादृक् । तादृशः । तावान् । तादृक्षः । दीर्घः, मत्वोत्वे अमूदृशः । अमूदृक् । अमूदृक्षः ।**

दृक् दृश वतुप् पर रहते इदम् के स्थान में ईश आदेश एवं किम् के स्थान में की आदेश होता है। त्यदादि उपपद में रहते दृश् धातु से किन् एवं कञ् प्रत्यय होते हैं। सूत्र 'त्यदादिषु दृशेः'। दृक्षपर रहते भी इदम् को ईश् किम् को की आदेश होता है।

सर्वनाम पूर्व में रहे तो आत्व होता है दृक् दृश, वतुप् पर रहते। मत्व ऊत्व करके अमू— दृक् आदि।

## १०२१ समासेऽङ्गुलेः सङ्गः ८।३।८०।

**अङ्गुलिशब्दात् सङ्गस्य सस्य मूर्द्धन्यः स्यात् समासे। अङ्गुलिषङ्गः। समासे किम् , अङ्गुलेः सङ्गः।**

समास में अङ्गुलि शब्द से पर सङ्ग के सकार को षकार होता है। षष्ठीतत्पुरुषसमासा-बयव सङ्ग के सकार को षत्व से अङ्गुलिषङ्गः। असमासे सङ्गः अङ्गुलेः। यहां षकार न हुआ।

**विमर्श**—यहां शङ्का होती हैं कि सूत्र में 'अङ्गुलेः' दिग्योगलक्षणा पञ्चमी है अतः 'तस्मात्' इस पञ्चमी परिभाषा से अङ्गुलि शब्द से अव्यवहित उत्तर सङ्ग जहां रहे वहां ही सकार को षकार होता है असमास में तो 'अङ्गुलेः सङ्गः' यहां मध्य मे विसर्ग का व्यवधान है षकार प्राप्त ही नहीं है, पुनः सूत्र में समास ग्रहण क्यों किया ?, सम्बोधन में 'हे अङ्गुले सङ्गं कुरु' यहां अव्यवहित सकार को षकारादेश निवृत्ति के लिए सूत्र में समास ग्रहण है इति पञ्चोक्तिनः।

## १०२२ भीरोः स्थानम् ८।३।८१।

**भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात् समासे। भीरुष्ठानम्। असमासे किम् , भीरोः स्थानम्।**

समास में भीरुशब्द से पर स्थान के सकार का मूर्धन्यादेश होता है। असमास में भीरोः स्थानम्। यहां भी पूर्ववत् शङ्का कर समाधान—हे भीरो स्थानं पश्य।

## १०२३ ज्योतिरायुषः स्तोमः ८।३।८३।

**आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात् समासे। ज्योतिष्टोमः। आयुष्टोमः। समासे किम् , ज्योतिषः स्तोमः।**

समास में ज्योतिष् एवं आयुष् से पर स्तोम के सकार को षकारादेश होता है। यज्ञविशेष में ज्योतिष्टोमः। आयुष्टोमः। असमास में ज्योतिषः स्तोमः। हे ज्योतिः स्तोमोऽस्ति।

## १०२४ सुषामादिषु च ८।३।९८।

**सस्य मूर्धन्यः। शोभनं साम यस्य सुषामा। सुषन्धिः।**

सुषामादि शब्दों में सकार को मूर्धन्य होता है। यथा अच्छी तरह सामोपाय करने वाला सुषामा। अच्छी सन्धि में सुषन्धिः।

## १०२५ एति संज्ञायामगात्।

स्वार्थेऽण। औषधं पिबति। ओषधयः क्षेत्रे रूढाः।

जाति भिन्न अर्थ में ओषधि प्रथमान्त से स्वार्थ में अण् प्रत्यय होता है। ओषधित्व जाति प्रवृत्तिनिमित्त जहां नहीं वह अण् का अभाव है।

## २१०७ प्रज्ञादिभ्यश्च ५।४।३८।

प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः।

प्रज्ञादि शब्दों से स्वार्थ में अण् प्रत्यय होता है। प्रज्ञ एव प्राज्ञः। स्त्री में ङीप् प्राज्ञी। देवता एव दैवतः। बन्धुरेव बान्धवः। ओर्गुणः से गुण हुआ है। प्रपूर्वक ज्ञा अवबोधने से क प्रत्यय आकार लोप उपपदसमास प्रज्ञः।

## २१०८ मृदस्तिकन् ५।४।३९।

मृदेव मृत्तिका।

मृद् शब्द से स्वार्थ में तिकन् प्रत्यय होता है। मिट्टी अर्थ में मृत्तिका।

## २१०९ सस्नौ प्रशंसायाम् ५।४।४०।

रूपपोऽपवादः। प्रशस्ता मृत् मृत्सा। मृत्स्ना। उत्तरसूत्रेऽन्यतरस्यां ग्रहणान्नित्योऽयम्।

प्रशंसा अर्थ में मृत् से स एवं स्न प्रत्यय होता है। मृत्सा। मृत्स्ना।

## २११० बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् ५।४।४२।

बहूनि ददाति बहुशः। अल्पानि अल्पशः। बह्वल्पार्थात् मङ्गलामङ्गलवचनम् ❀। नेह—बहूनि ददत्यनिष्टेषु। अल्पं ददत्याभ्युदयिकेषु।

बहु एवं अल्पार्थक कारकों से पर शस् प्रत्यय विकल्प से होता है। वह अधिक देता है बहुशः। वह अल्प दान करता है अल्पशः। यहां वार्तिककार कहते हैं कि मङ्गल समय में अधिक दाता में ही बहुशः। एवं अमङ्गल अर्थात् अनिष्ट में अल्पदाता में अल्पशः होता है। अन्यथा नहीं। इससे विपरीत क्रम की प्रतीति में वाक्य ही रहता है। शस् नहीं होता है।

## २१११ संख्यैकवचनाच्च वीप्सायाम् ५।४।४३।

द्वौ द्वौ ददाति द्विशः। माषं माषं माषशः। प्रस्थशः। परिमाणशब्दा वृत्तावेकार्था एव। संख्यैकवचनात् किम्, घटं घटं ददाति। वीप्सायां किम्, द्वौ ददाति। कारकादित्येव। द्वयोर्द्वयोः स्वामी।

वीप्सार्थ में संख्यावाचक शब्द एवं एकार्थ प्रतिपादक शब्द इनसे शस् प्रत्यय होता है। द्वौ द्वौ ददति द्विशः यह शस् से वीप्सा उक्त है। माषम् माषम् माषशः। प्रस्थं प्रस्थं प्रस्थशः। परिमाण वाचक शब्द तद्धित प्रत्ययरूप वृत्ति में एकत्व संख्याविशिष्ट संख्येयार्थक ही है। घटं घटं ददाति यहां वाक्य ही रहा क्योंकि संख्येकवाचक घट शब्द नहीं है। वीप्सा की अप्रतीति से द्वौ ददाति। द्वयोः द्वयोः स्वामी यहां क्रिया जनक स्वरूप कारकत्व षष्ठयन्त को नहीं है। कारक छः हैं। षष्ठी कारक विभक्ति नहीं है।

## २११२ प्रतियोगे पञ्चम्यास्तसिः ५।४।४४।

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात् तसिः स्यात्। प्रद्युम्नः कृष्णतः प्रति। ॐ आद्यादिभ्य उपसंख्यानम्। आदौ आदितः। मध्यतः। अन्ततः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयं स्वरेण स्वरतः वर्णतः।

कर्मप्रवचनीय प्रति के योग में जो पञ्चमी विहित है तदन्त से तसि प्रत्यय होता है। 'प्रतिः प्रतिनिधिप्रतिदानयोः' सूत्र से प्रति की कर्मप्रवचनीय संज्ञा विहित है एवं 'प्रतिनिधि-प्रतिदाने च यस्मात्' कृष्ण से पञ्चमी है। तद से प्रातिपदिकत्व प्रयुक्त पञ्चमी का लुक् कृष्णतः की अव्यय संज्ञा है। सकार का रुत्वविसर्ग। * आदि-आदि शब्दों के उत्तर तसि प्रत्यय होता है। आदौ आदित आदि। आकृतिगण से स्वरतः वर्णतः यहां तृतीयान्त से तसि प्रत्यय हुआ।

## २११३ अपादाने चाहीयरुहोः ५।४।४५।

अपादाने या पञ्चमी तदन्तात् तसिः स्यात्। ग्रामादागच्छति ग्रामतः। अहीयरुहोः किम्, स्वर्गाद्धीयते। पर्वतादवरोहति।

अपादान में विहित जो पञ्चमी तदन्त से तसि प्रत्यय होता है, हीय एवं रुह योग में नहीं। ग्रामतः। हीय, रुह के योग में वाक्य ही रहता है।

## २११४ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ५।४।४६।

अकर्तरि तृतीयान्ताद्वा तसिः स्यात्। अतिक्रम्य ग्रहोऽतिग्रहः। चारित्र्येणातिगृह्यते = चारित्रतोऽतिगृह्णाति। चारित्रेणान्यान् अतिक्रम्य वर्तत इत्यर्थः। अव्यथनम् = अचलनम्। वृत्तेन न व्यथते = वृत्ततो न व्यथते। वृत्तेन न चलतीत्यर्थः। क्षेपे—वृत्तेन क्षिप्तः = वृत्ततः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः। 'अकर्तरि' इति किम्, देवदत्तेन क्षिप्तः।

अतिग्रह, अव्यथन, निन्दा अर्थ में कर्तृकारक भिन्न तृतीयान्त से विकल्प से तसि प्रत्यय होता है। अतिक्रम पूर्वक ग्रहण को अतिग्रह कहते हैं। अपने चारित्र्य से अन्यजनों को उल्लङ्घन करके रहता वह है। यहां चारित्र्यतः हुआ। अव्यथन का अर्थ है अचलन। वृत्त से च्युत नहीं होता है वृत्ततो न व्यथते। वृत्तेन क्षिप्तः = निन्दितः। वृत्त आचरण से निन्दापात्र। कर्तृ तृतीयान्त से देवदत्तेन क्षिप्तः यहां तसि न हुआ किन्तु वाक्य ही रहा।

## २११५ हीयमानपापयोगाच्च ५।४।४७।

हीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः। वृत्तेन हीयते, वृत्तेन पापः = वृत्ततः। क्षेपस्याविवक्षायामिदम्। क्षेपे तु पूर्वेण सिद्धम्। अकर्तरीति किम् देवदत्तेन हीयते।

हीयमान एवं पापयुक्त कर्तृवाचक भिन्न जो तृतीयान्त उससे विकल्प से तसि प्रत्यय होता है। आचरण से त्यक्त एवं आचरण से पापी अर्थ में वृत्ततः। निन्दा की अविवक्षा में यह सूत्र प्रवृत्त होता है। निन्दा में पूर्व सूत्र से ही तसि प्रत्यय होता है। कर्तृ तृतीयान्त से तसि का अभाव—देवदत्तेन हीयते।

## २११६ षष्ठ्या व्याश्रये ५।४।४८।

षष्ठ्यन्ताद्वा तसिः स्यान्नानापक्षसमाश्रये। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। अर्जुनस्य कर्णस्य पक्षे इत्यर्थः। व्याश्रये किम्, वृक्षस्य शाखा

विभिन्नपक्ष के अवलम्बन अर्थ में षष्ठ्यन्त पद से विकल्प तसि प्रत्यय होता है। देवगण अर्जुन के पक्षपाती हुए। अर्जुनतः। आदित्य कर्ण के पक्षपाती हुए कर्णतः। जहाँ व्याश्रय नहीं वहाँ तसिका अभाव है यथा वृक्षस्य शाखा।

## २११७ रोगाच्चापनयने ५।४।४९।

रोगवाचिनः षष्ठ्यन्ताद्वा तसिश्चिकित्सायाम्। प्रवाहिकातः कुरु। प्रतिकारमस्याः कुर्वित्यर्थः। अपनयने किम्, प्रवाहिकायाः प्रकोपनं करोति।

चिकित्सार्थ में रोगवाचक षष्ठ्यन्त से उत्तर विकल्प तासि प्रत्यय होता है। विसूचिका को प्रवाहिका कहते हैं। प्रच्छर्दिका वमनव्याधिको कहते हैं। विसूचिका को प्रतिकार की चिकित्सा तुम करो। अपनयन = दूरीकरण जहां नहीं वहां तसिका अभाव है। यथा प्रवाहिकायाः प्रकोपनं करोति।

## २११८ कृभ्वस्तियोगे संपद्यकर्तरि च्विः ५।४।५०।

* अभूततद्भावे इति वक्तव्यम्' *। विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद् विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे।

कृ भू अस् धातु निष्पन्नरूप के योग में विकारपना को प्राप्त हुई प्रकृति में वर्तमान विकारवाचक शब्द से पर विकल्प से च्वि प्रत्यय होता है। जो घटना नहीं हुई उसके कथन को अभूततद्भाव कहते हैं। अभूत का भूतरूप से कथन अर्थात् मिथ्या कथन या तद्भाव में तत्प्रकारक ज्ञान का आरोप करना।

## २११९ अस्य च्वौ ७।४।३२।

अवर्णस्य ईत् स्यात् च्वौ। वेर्लोपः। च्व्यन्तत्वादव्ययत्वम्। अकृष्णः कृष्णः सम्पद्यते, तं करोति कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्। *अव्ययस्य च्वावीत्वं नेति वाच्यम् *। दोषाभूतमहः। दिवाभूता रात्रिः। एतच्चाऽव्ययीभावश्चेति सूत्रे भाष्ये उक्तम्।

च्वि प्रत्यय पर रहते अकार एवं आकार के स्थान में ईकार होता है। च्वि प्रत्यय का सर्वापहारी लोप होता है। प्रत्यय लक्षण प्रयुक्त यहां च्वि प्रत्ययान्तत्व प्रयुक्त अव्यय संज्ञा। कृष्णत्वगुणाश्रयद्रव्य का अभाव जहां है वह कृष्णत्व प्रकारक ज्ञान में कृष्णीभवति। च्वि, ईः। अव्यय को च्वि प्रत्यय पर रहते ईत्व का अभाव ही रहता है। यह विषय अव्ययीभावश्च सूत्र के भाष्य में चर्चित है।

## २१२० क्यच्व्योश्च ६।४।१५२।

हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परतः। गार्गीभवति।

हल् से पर अपत्य अर्थ में विहित तद्धित प्रत्यय के यकार का लोप होता है। यञ् प्रत्ययान्त गार्ग्य शब्द से सुप् करके च्वि प्रत्यय यकार का लोप हुआ ईत्व से ईकार के व्यवधान से 'आपत्यस्य' से यलोप यहां अप्राप्त है।

## २१२१ च्वौ च ७।४।२६।

च्वौ परे पूर्वस्य दीर्घः स्यात्। शुचीभवति। पटूस्यात्। अव्ययस्य दीर्घत्वं नेति केचित्; तन्निर्मूलम्। स्वस्ति स्यादिति तु महाविभाषया च्वेरभावात्सिद्धम्।

स्वस्तीस्यादित्यपि पक्षे स्यादिति चेदस्तु। यदि नेष्यते तर्ह्यनभिधानात् च्विरेव नोत्पद्यते इत्यस्तु। रीङ् ऋतः। मात्रीकरोति।

च्विप्रत्यय पर में रहते पूर्वपद के अन्त्य अच् का दीर्घ होता है। शुचीभवति। कोई कहते हैं कि अव्यय का दीर्घ नही होता है। यह कथन निर्मूल है। महाविभाषा का अधिकार से च्वि का अभाव से 'स्वस्ति स्यात्' की सिद्धि होती ही है। यदि पक्ष में दीघ इष्ट नहीं है तो अनभिधान मानना कहा है कि "यथालक्षणम् अप्रयुक्ते" अप्रयुक्त लक्ष्य में लक्षण प्रवृत्ति का अभाव है, अर्थात् लक्षण की प्रवृत्ति नहीं होती। किन से अप्रयुक्त जिज्ञासा में शिष्टो द्वारा अकथित शब्द। यदि अभिधान है तो 'स्वस्तीस्यात्' होता ही है।

ऋकारान्त शब्द से 'रीङ् ऋतः' से रीङादेश मात्रीकरोति हुआ।

## २१२२ अरुर्मनश्चक्षुश्चेतोरहो रजसां लोपश्च ५।४।५१।

एषां लोपः स्यात् च्विश्च। अरूकरोति। उन्मनीस्यात्। उच्चक्षूकरोति। विचेतीकरोति। विरहीकरोति। विरजीकरोति।

अरुस्, मनस्, चक्षुस्, चेतस्, रहस्, रजस् इन को च्विप्रत्यय होता है एवं सकार का लोप होता है। अस्य च्वौ से ईकार होता है।

## २१२३ विभाषासाति कार्त्स्न्ये ५।४।५२।

च्विविषये सातिर्वा स्यात् साकल्ये।

च्विप्रत्यय के विषय में विकल्प से साति प्रत्यय होता है साकल्य अर्थ में।

## २१२४ सात्पदाद्योः ८।३।१११।

सस्य षत्वं न स्यात्। दधि सिञ्चति। कृत्स्नं शस्त्रम् अग्निः सम्पद्यतेऽग्निसाद् भवति। अग्नीभवति। महाविभाषया वाक्यमपि। कार्त्स्न्ये किम्, एकदेशेन शुक्लीभवति पटः।

इण् से पर साति प्रत्यय के सकार को एवं पदादि सकार को षकारादेश नहीं होता है। दधि सिञ्चति यहां 'आदेशप्रत्यययोः' से प्राप्त षत्व का इसने निषेध किया। सम्पूर्णशस्त्र अग्निस्वरूप होता है अग्निसात् भवति यहां भी षत्वाभाव हुआ। पक्ष में च्वि दीर्घ अग्नीभवति। महाविभाषा से पक्ष में प्रत्ययरहित वाक्य भी होता है। साकल्य से भवन नहीं किन्तु एकदेश = एकावयव शुक्लत्व को प्राप्त हुआ वहां केवल च्वि एवं दीर्घ 'शुक्लीभवति पटः एकदेशेन'।

## २१२५ अभिविधौ सम्पदा च ५।४।५३।

सम्पदा कृभ्वस्तिभिश्च योगे सातिर्वा स्याद् व्याप्तौ। पक्षे कृभ्वस्तियोगे च्विः। सम्पदा तु वाक्यमेव। अग्निसात् सम्पद्यते। अग्निसाद् भवति शस्त्रम्।

अग्नीभवति । जलसात् सम्पद्यते जलीभवति लवणम् । एकस्या व्यक्तेः सर्वावयवावच्छेदेनाऽन्यथा भावः = कात्स्न्र्यम् । बहूनां व्यक्तीनां किञ्चिद्वयवावच्छेदेनान्यथात्वं त्वभिविधिः ।

अभिविधि ( व्याप्ति ) में सम्पूर्वक पद धातु एवं कृ भू अस् धातुओं के योग में विकल्प से साति प्रत्यय होता है । पक्ष में कृ, भू, अस् के योग में च्वि प्रत्यय होता है । सम्पूर्वक पद् धातु के योग में तो पक्ष में वाक्य ही रहता है ।

एक व्यक्ति का सर्वावयव का अन्यथाभाव = वैपरीत्य को कात्स्न्र्य कहते हैं । अनेक व्यक्तियों में एक का अन्यथा भाव के अभिविधि कहते हैं ।

## २१२६ तदधीनवचने ५।४।५४।

सातिः स्यात् कृभ्वस्तिभिः सम्पदा च योगे । राजसात् करोति । राजसात् सम्पद्यते । राजाधीनमित्यर्थः ।

उसके अधिकार में है ऐसा कथन में कृ, भू, अस्, एवं सम्पूर्वक पद् धातुओं के योग में साति प्रत्यय होता है । राजा के अधीन करता है – राजसात् करोति आदि ।

## २१२७ देये त्रा च ५।४।५५।

तदधीने देये त्रा स्यात् सातिश्च कृभ्वादियोगे । विप्राधीनं देयं करोति विप्रत्रा करोति । विप्रत्रा सम्पद्यते । पक्षे विप्रसात् करोति । देये किम्, राजसाद् भवति राष्ट्रम् ।

तदधीनरूप अर्थ में एवं दानकर्मरूप देय अर्थ में कृ, भू, अस् एवं सम्पूर्वक पद् धातु के योग में त्रा एवं साति प्रत्यय होता है ।

वह दान क्रिया जन्य फलाश्रय वस्तु अर्थात् देय को ब्राह्मण के अधीन करता है अर्थात् अपना स्वत्व की निवृत्ति पूर्वक ब्राह्मण का उसपर स्वत्व उत्पन्न करता है वह त्रा प्रत्यय एवं साति प्रत्यय से विप्रत्रा करोति । विप्रसात् करोति । देय नहीं वहां त्रा प्रत्यय नहीं । यथा राष्ट्र राजा के अधीन प्रभाव से है यहां देय नहीं अतः 'राजसात्' यही हुआ ।

## २१२८ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ५।४।५६।

एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा वन्दे रमे वा । बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः ।

द्वितीयान्त एवं सप्तम्यन्त देव, मनुष्य, पुरुष, पुरु, मर्त्य इनसे पर त्रा प्रत्यय होता है । यथा देवत्रा वन्दे रमे वा । सूत्र में बहुल ग्रहण से अन्यत्र भी त्रा प्रत्यय होता है । जीवन धारण करने वाले मनुष्य का मन अनेक सांसारिक विषयों में लगा रहता है यहां बहुत्रा जीवतो मनः हुआ । सूत्र में पुरुशब्द बहुपर्य्याय है ।

## २१२९ अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ५।४।५७।

द्व्यच् अवरं न्यूनं न तु ततो न्यूनम् अनेकाजिति यावत् तादृशम् अर्द्ध

यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे। ❀ डाचि विवक्षिते द्वे बहुलम् ❀। ❀ नित्यमाम्रेडिते डाचीति वक्तव्यम् ❀। डाच् परं यदाम्रेडितं तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटा करोति। अव्यक्तानुकरणात् किम्, दृषत्करोति। द्व्यजवरार्धात् किम्, श्रत्करोति। अवरेति किम्, खरटखरटा करोति। त्रपटत्रपटाकरोति। अनेकाच इत्येव सूत्रयितुमुचितम्। एवं हि डाचीति परसप्तम्येव द्वित्वे सुवचेत्यवधेयम्। अनितौ किम्, पटिति करोति।

कृ, भू अस् धातुओं के योग में दो अच् से न्यून अर्धभाग न रहे अर्थात् अनेकाच् आधा भाग है जिसका ऐसा अव्यक्त अनुकरण प्रातिपदिक से पर डाच् प्रत्यय होता है, किन्तु इति शब्द के योग में नहीं होता है।

डाच् प्रत्यय विवक्षित होनेपर बहुल करके द्वित्व होता है। डाचि विषय सप्तमी है. पर सप्तमी नहीं, अतः डाच् करने के प्रथम ही द्वित्व डाच के विषय में होता है। डाच् प्रत्यय परक जो आम्रेडित उससे पूर्ववर्ण एवं आम्रेडित पर भाग का आदि वर्ण का पररूप होता है। प्रकृत में तकार एवं पकार का पररूप पकार हुआ है।

ध्वनि का अनुकरण सदृश शब्दार्थक अव्यक्त जो पटत् उसका द्वित्व से पटत्पटत् करोति। यहां डाच् टिका लोप पटत् पटा करोति यहां 'तस्य परमाम्रेडितम्' से परभाग की आम्रेडित संज्ञा तकार पकार का पकाररूप पर रूप पटपटाकरोति। दृषत् करोति यहां दृषत् अव्यक्त अनुकरण नहीं है।

एकाच् श्रत् है। अतः यहां श्रत्करोति यही रहा। न्यून द्व्यच्क नहीं है, यथा खरटखरटा-करोति। यहां अनेकाच् यही पद करना चाहिये। एवं डाचि पर सप्तमी ही है, विवक्षित सप्तमी में प्रमाणाभाव है, भाष्यकारने कहा है कि "तस्मिन्निति परिभाषायां जागरूकायां सत्यां सत्सप्तम्याश्रयणमयुक्तम्" यहां सत् पद अन्य सप्तमी का उपलक्षण है। द्वित्व में पर सप्तमी से डाच् करने के बाद द्वित्व करना उचित है। 'पटिति' यहां पटत् इति टि = अत् के स्थान में पर इकाररूप हुआ है।

## २१३० कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ५।४।५८।

द्वितीयादिभ्यो डाच् स्यात् कृञ एव योगे कर्षणेऽर्थे। बहुलोक्तेरव्यक्तानु-करणादन्यस्य डाचि न द्वित्वम्। द्वितीयं तृतीयं कर्षणं करोति = द्वितीया करोति। तृतीया करोति। शम्बशब्दः = प्रतिलोमं। अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति शम्बाकरोति। बीजेन सह कर्षति बीजाकरोति।

कृषिकर्म कर्षणरूप अर्थ में कृधातु के योग में द्वितीय, तृतीय, शम्ब, बीज इनसे पर डाच् प्रत्यय होता है। पूर्वत्र बहुल ग्रहण से अव्यक्तानुकरण से अन्यत्र डाच् प्रत्यय पर में रहते द्वित्व नहीं होता है। खेत को दूसरी बार या तीसरी बार हल द्वारा कर्षण करता है वहां डाच् से द्वितीया करोति तृतीया करोति हुआ। खेत में उलटकर हलचलाकर कर्षण किया जाय इस अर्थ में शम्ब शब्द है। सीधा कर्षण किया हुआ खेत को उलट कर कर्षण में शम्बाकरोति खेत को बीज के साथ कर्षण करता है वह है बीजाकरोति।

## २१३१ संख्यायाश्च गुणान्तायाः ५।४।५९।

कृञो योगे कृषौ डाच् स्यात्। द्विगुणा करोति क्षेत्रम्। क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः।

गुण शब्द है अन्त में जिसको ऐसा संख्यावाचक शब्द से पर कृधात्वर्थ क्रिया के योग में डाच् प्रत्यय होता है। खेत को दूना कर्षण करता वह है अर्थ में द्विगुणाकरोति डाच् प्रत्यय हुआ।

## २१३२ समयाच्च यापनायाम् ५।४।६०।

कृषाविति निवृत्तम्। कृञो योगे डाच् स्यात्। समया करोति = कालं यापयतीत्यर्थः।

कृधातु के योग में समय शब्द से यापनार्थ में डाच् प्रत्यय होता है। समयाकरोति यहां डाच् प्रत्यय हुआ। कालयापन = समय विताना है।

## २१३३ सपत्रनिष्पत्रादतिव्यथने ५।४।६१।

सपत्राकरोति मृगम्। सपुङ्खशरप्रवेशेन सपत्रं करोतीत्यर्थः। निष्पत्राकरोति = सपुङ्खस्य शरस्यापरपार्श्वे निर्गमनान्निष्पत्र करोतीत्यर्थः। अतिव्यथने किम्, सपत्रं निष्पत्रं वा करोति भूतलम्।

अत्यन्त पीड़ा अर्थ में कृधातु के योग में सपत्र एवं निष्पत्र से डाच् प्रत्यय होता है। सपत्रा करोति = पुङ्ख सहित बाण का प्रवेश कराकर मृग को सपत्र करता है। निष्पत्रा करोति = सपुङ्ख बाण को दूसरे पार्श्व में प्रवेश कराकर मृग को निष्पन्न करता है। अतिशय पीडा न होने पर भूतल को सपत्र करता है या निष्पत्र करता है वहां वाक्य ही रहता है।

लक्ष्ये शराः पतन्ति अनेन इति पत्रम्। शराणां पुङ्खगतो बर्हः।

## २१३४ निष्कुलान्निष्कोषणे ५।४।६२।

निष्कुलाकरोति दाडिमम्। निर्गतं कुलम् अन्तरवयवानां समूहो यस्मादति बहुव्रीहेर्डाच्।

भीतरी अवयवों का बहिःनिस्सारणरूप निष्कोषण अर्थ में निष्कुल शब्द से पर डाच् प्रत्यय होता है। अनार के भीतरी समस्त दाने थे उसको बाहर निकालने का व्यापार वह करता है यहां 'निष्कुला करोति' होता है। यहां बहुव्रीहि समास है यथा—अन्तस्थ अवयवों का जिससे निष्काशन है निर्गतं कुलम् = अन्तरवयवानां समूहो यस्मात् यहां निष्कुल से डाच् हुआ।

## २१३५ सुखप्रियादनुलोम्ये ५।४।६३।

सुखाकरोति। प्रियाकरोति गुरुम् = अनुकूलाचरणेनानन्दयतीत्यर्थः।

अनुकूलाचरणरूप आनुलोम्यार्थ में सुख एवं प्रिय से कृधातु के योग में डाच प्रत्यय होता है। अनुकूल आचरण से गुरु को आनन्दित शिष्य करता है इस अर्थ में सुखा करोति डाच् हुआ।

## २१३६ दुःखात्प्रातिलोम्ये ५।४।६४।

दुःखाकरोति स्वामिनम् = पीडयतीत्यर्थः।

प्रतिकूलाचरण अर्थ में दुःख से डाच् प्रत्यय होता है। विपरीत आचरण से स्वामी को दुःखयुक्त वह करता है यहां डाच् दुःखाकरोति।

## २१३७ शूलात्पाके ५।४।६५।

शूलाकरोति मांसम्। शूलेन पचतीत्यर्थः।

पाकरूप अर्थ में शूल से कृधातु के योग में डाच् प्रत्यय होता है। शूल से मांस को पकाता है यहां डाच् शूलाकरोति मांसम्। पच् धात्वर्थ = विक्लित्ति जनक व्यापार है। रूपान्तर प्राप्ति को विक्लित्ति कहते हैं। विक्लित्तिरूपफल जन्य है व्यापार उसका जनक है एवं व्यापार का जनक यहां कर्ता = वह है।

## २१३८ सत्यादशपथे ५।४।६६।

सत्याकरोति भाण्डं वणिक् क्रेतव्यमिति तथ्यं करोतीत्यर्थः। शपथे तु सत्यं करोति विप्रः।

शपथ अर्थ न होने पर सत्य शब्द से कृधातु के योग में डाच् प्रत्यय होता है। क्रयण कर्म वस्तु को तथ्य करता है वणिक् = वैश्य इसमें 'सत्याकरोति'। यहां भाण्ड का अर्थ क्रयण क्रिया जन्यफलाश्रय रत्नादि वस्तु समूह है। शपथ अर्थ में सत्यं करोति विप्रः यहां डाच् न हुआ। मैं इसको खरीदूंगा एतदर्थ बयाना देकर सौदा पक्का करता है वहां ही सत्याकरोति। अन्यत्र नहीं।

## २१३९ मुद्रात् परिवापणे ५।४।६७।

मद्रशब्दो मङ्गलार्थः। परिवापणम् = मुण्डनम्। मद्राकरोति = माङ्गल्य-मुण्डनेन संस्करोतीत्यर्थः। ॐ मद्राच्चेति वक्तव्यम् ॐ। मद्राकरोति। अर्थः प्राग्वत्। परिवापणे किम्, मद्रं करोति।

इति स्वार्थिकप्रकरणम्

इति तद्धितप्रकरणं समाप्तम्

यह मङ्गलार्थ मुण्डन संस्कार करता है = मुद्राकरोति मङ्गलार्थक मद्र से मुण्डन में डाच् प्रत्यय होता है। अर्थ इसका भी पूर्ववत् ही है। मुण्डन से भिन्न मङ्गल वह करता है यहां 'भद्रं करोति' हुआ। इसी प्रकार मद्रं करोति। प्रकृत्यर्थ में होने वाले प्रत्ययों का प्रकरण समाप्त हुआ।

स्वार्थिकप्रकरण समाप्त

एवं तद्धितप्रकरण समाप्त



# अथ द्विरुक्तप्रकरणम्

## २१४० सर्वस्य द्वे ८।१।१।

इत्यधिकृत्य ।

यह अधिकार सूत्र है । उत्तर पठित सूत्र में इसका सम्बन्ध है एवं कहेगा कि सम्पूर्ण पद का द्वित्व होता है । स्वयं कार्य न करके उत्तरत्र पठित शास्त्रों के साथ एकवाक्यता द्वारा अर्थ बोधक को अधिकार कहते हैं । यह सामान्य लक्षण है ।

विमर्श—सर्वशब्द से स्वरूप ग्रहण यहां नहीं है नाम्रेडितस्य सूत्रारम्भ सामर्थ्य से । वृक्षाभ्याम् यहां प्रकृतिमात्र पद संज्ञक है, उसका द्वित्ववारणार्थ सर्वग्रहण है । यहां स्थाने द्विर्वचन पक्ष है । अतः द्विर्वचन युक्त समुदाय में स्थानिवद्भाव से पदत्व रहता है स्थाने द्विर्वचन पक्ष में । एवं सर्वं द्विः उच्चारयेत् यह भी एक पक्ष है । उस पक्ष में अनस्तमितावयवक आदेश होता है अवयव गत नष्ट न होकर उसका द्विवार उच्चारण होता है—"द्विः प्रयोगो द्विर्वचनम्" उसी का केवल द्विवार उच्चारण है । प्रथम पक्ष में पदत्व निबन्धन कार्य अवयव नहीं होगें, होना इष्ट है—अपचनङ् अपचन् यहां पूर्व में ङमुडागम होता है । वृक्षान् वृक्षान् में पदान्तत्व-प्रयुक्त णत्व-निषेध इष्ट है । 'अग्रेऽग्रे' में पदान्तत्व-प्रयुक्त पूर्वरूप इष्ट है । पूर्वपक्ष स्थान्यादेश में 'पयः पयः' यहां सोऽपदादौ से सत्वाप्त्ति आदि अनेक दोष हैं ।

## २१४१ नित्यवीप्सयोः ८।१।४।

**आभीक्ष्ण्ये वीप्सायाञ्च द्योत्ये पदस्य द्विर्वचनं स्यात् । आभीक्ष्ण्यं तिङन्ते-ष्वव्ययसंज्ञककृदन्तेषु च । पचति पचति । भुक्त्वा भुक्त्वा । वीप्सायाम्—वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः ।**

आभीक्ष्ण्य एवं वीप्सा द्योत्य रहे वहां पद का द्वित्व होता है । तिङन्त एवं अव्यय संज्ञक कृदन्त में आभीक्ष्ण्य की प्रतीति होती है । पुनः पुनः को आभीक्ष्ण्य कहते हैं । पौनःपुन्यं भृशार्थश्च आभीक्ष्ण्यम् ।

यह द्विवचन बहिरङ्ग है यङ् अन्तरङ्ग है अतः यङ् जो क्रियासमभिव्याहृत में विधीयमान है उसको द्विर्वचन बाध नहीं करता है । क्रियानिष्ठ धर्म आभीक्ष्ण्य है । क्रियाप्रधानार्थक पद 'पचति' उसका इससे द्वित्व हुआ—पचति पचति । पुनः पुनः पचति, अथवा जितनी विक्लित्ति अपेक्षित है उससे अधिक विक्लित्ति में भी आभीक्ष्ण्य की प्रतीति है फलगत अतिशय में । देवदत्ताभिन्न एकत्व-विशिष्ट जो कर्ता तद्वृत्ति एवं तण्डुलाभिन्न जो कर्म तन्निष्ठा जो विक्लित्ति तज्जनक वर्तमान कालिक व्यापार यह अर्थ पचति है ।

यहां तिके तीन अर्थ हैं—कर्ता संख्या = एकत्व एवं काल । धात्वर्थ दो हैं फल = विक्लित्ति एवं व्यापार । तण्डुलपदोत्तर द्वितीयार्थ कर्म है प्रकृत्यर्थ का कर्म में अभेद सम्बन्ध है, फल का व्यापार में निष्ठत्व सम्बन्ध है । काल अवच्छेदक = व्यावर्तक वर्तमान काल है क्रिया = व्यावर्त्य अर्थात् अवच्छेद्य है । विस्तृत विवरण श्री बा० कृ० पञ्चोलिकृत वैयाकरण भूषण की व्याख्या प्रभा से अवगत करना चाहिये ।

भुक्त्वा भुक्त्वा यहां भी आभीक्ष्ण्य में द्वित्व हुआ । गलबिलाधःसंयोगजनक व्यापार भुज् धात्वर्थ है 'गतः' आदि का अध्याहार करके पूर्व कालिकत्व की विवक्षा में जहां अनेक क्रियाओं का एक कर्ता रहे वहां पूर्वकालोद्भव जो क्रिया तद्वाचक जो धातु उससे 'समानकर्तृकयोः' से क्त्वाप्रत्यय होता है । अव्ययकृतो भावे से भावार्थ क्त्वा प्रत्यय है । भुक्त्वा की अव्यय संज्ञा द्वित्व से 'भुक्त्वा भुक्त्वा' रूप हुआ है ।

वीप्सा में द्वित्व हुआ। 'वृक्षं वृक्षम्' सिञ्चति। क्रिया साकल्येन सम्बन्धुमिच्छा वीप्सा। संसार स्थित सकल वृक्ष का सिञ्चन सम्भव नहीं है, किन्तु यहां सर्व शब्द संकुचितार्थ प्रतिपादक यथा 'सर्वं भुक्तम्' यहां संसार स्थित सकल अन्नकर्मक भोजन सम्भव नहीं है। अतः जो घर में पकाया गया था वह सब खा लिया तथैव प्रकृत में स्व उद्यान = वाटिका में जो वृक्ष है उनको सेचन क्रिया द्वारा व्याप्त करता है, उस उद्यान के किसी भी वृक्ष को जल सेचन रहित नहीं करता है। सर्वान् वाटिकास्थान् वृक्षान् सिञ्चति यही अर्थ हुआ। इसी प्रकार सर्व शब्द अनेकत्र स्थलों में संकुचितार्थ प्रतिपादक है।

'सर्वे ब्राह्मणा आमन्त्रिताः' यहां भी भूमण्डल से सकल ब्राह्मणों का आमन्त्रण सम्भव नहीं, अतः स्वग्रामस्थ ब्राह्मणों का आमन्त्रण यही अर्थ प्रतीयमान है। वीप्सा का अपर उदाहरण—ग्रामो ग्रामो रमणीयः। प्रत्येक ग्राम सौन्दर्य से युक्त है। यत्र यत्र ग्रामत्वं तत्र तत्र रमणीयत्वम् यह व्याप्ति वीप्सापदार्थव्याप्ति प्रतिपादन विषयक इच्छा है।

## २१४२ परेर्वर्जने ८।१।५।

परिपरि वङ्गेभ्यो वृष्टो देवः। वङ्गान् परित्यज्येत्यर्थः। ॐ परेर्वर्जने वा वचनम् ॐ। परि वङ्गेभ्यः।

वर्जनार्थक परि शब्द का द्वित्व होता है। वङ्ग प्रदेश को छोड़कर मेघ ने वर्षण क्रिया की वहां द्वित्व परिपरि वङ्गेभ्यः। वर्जन में परिका विकल्प से द्वित्व होता है। यहां एक और वार्तिक भी है—* परेर्वर्जनेऽसमासे *। समास-घटक परि का द्वित्व नहीं होता है—यथा परित्रिगर्तं वृष्टो देवः।

## २१४३ उपर्यध्यधसः सामीप्ये ८।१।७।

उपर्युपरि ग्रामम्। ग्रामस्योपरिष्टात्। समीपे देशे इत्यर्थः। अध्यधि सुखम्। सुखस्योपरिष्टात्। समीपकाले दुःखमित्यर्थः। अधोऽधो लोकम्। लोकस्याधस्तात् समीपे देश इत्यर्थः।

सामीप्य अर्थ में उपरि, अधि, अधः, इनका द्वित्व होता है। ग्राम के ऊपर समीप देश में = उपरि उपरि ग्रामम्। सामीप्य का अर्थ है प्रत्यासत्ति, वह देशकृत एवं कालकृत है। अध्यधि सुखम् = सुख के अनन्तर काल में दुःख यहां कालकृत सामीप्य है। उपरि चन्द्रमा यहां सामीप्य नहीं अतः द्वित्वाभाव है। उपरि शिरसो घटं धारयति वहां वास्तविक सामीप्य है, किन्तु उसकी अविवक्षा से द्वित्वाभाव है। विवक्षा ही शब्द प्रयोग में प्रधान कारण है। 'अधोऽधो लोकम्' यहां द्वित्व है। अर्थ—लोक के अधस्तल के समीप देश में। यहां देश कृत प्रत्यासत्ति है।

## २१४४ वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ८।१।८।

असूयायाम्—सुन्दर सुन्दर वृथा ते सौन्दर्यम्। सम्मतौ—देव देव वन्द्योऽसि। कोपे—दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि।

कुत्सने—धानुष्क धानुष्क वृथा ते धनुः।

भर्त्सने—चोर चोर घातयिष्यामि त्वाम्।

असूया, सम्मति, कोप, कुत्सा, भर्त्सन अर्थ में वाक्य के आदि में स्थित आमन्त्रित संज्ञक पद का द्वित्व होता है। यहां कोप एवं असूया से पृथक् कुत्सन एवं भर्त्सन व्यर्थ ही है, क्योंकि

असूया के बिना कुत्सन नहीं होता है, एवं कोप के बिना कोई डाटा नहीं जाता। अतः भर्त्सन कोप पूर्वक ही है। यहां यह कथन उचित नहीं है हितबुद्धया गुरुजन अकुपित होते हुए भी भर्त्सन शिष्यों का करते हैं। एवं असूया बिना भी कुत्सा वे करते हैं। अतः कुत्सन, भर्त्सन सूत्र में आवश्यक है।

सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः। लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः॥

गुरुजन अमृतयुक्त हाथों से शिष्यों का ताडन करते हैं, विष से युक्त करों से। लालन को आश्रय करने वाले दोष है, एवं ताडन को आश्रय करने वाले गुण है। यह भी कहा है कि पाँच वर्ष तक ताडन करें १६ वर्ष के पुत्रादिक में ताडन निषिद्ध है, उसको समझा बुझाकर हितका उपदेश करें।

सूत्र के उदाहरण स्पष्ट ही है। १—कुत्सित कर्म कर्ता का सौन्दर्य वृथा है। अतः असूया गम्यमान है। २—सम्मति में हे देव तुम पूज्य हो = अभिवादन योग्य। ३—कोप में है अविनयशील अब तुम अविनय का फल जानोगे। ४—मैं धनुष् विद्या में निपुण तुम्हारा धनुष् धारण व्यर्थ में = गरीब निरपराधी को सताने पर यह कहा गया है। ५—हे चोर, अब तुम तस्कर वृत्ति का फल प्राण वियोग व्यापार रूप हनन को प्राप्त होगे।

## २१४५ एकं बहुव्रीहिवत् ८।१।९।

द्विरुक्तो एकशब्दो बहुव्रीहिवत्। तेन सुब्लोपपुंवद्भावौ। एकैकमक्षरम्। इह द्वयोरपि सुपोर्लुकि कृते बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात् सुप्। एकैकया आहुत्या। इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः।

न बहुव्रीहावित्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम्। तेनातिदिष्टबहुव्रीहौ सर्वनामताऽस्त्येवेति प्राञ्चः। वस्तुतस्तु भाष्यमते प्रत्याख्यातमेतत्। सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकम्, न तु बहुव्रीहावितीहातिदेशशङ्कैव नास्ति। एकैकस्मै देहि।

द्विरुक्त = द्वित्वनिष्पन्न एक शब्द बहुव्रीहि समान होता है। इस कारण सुप् का लोप पुंवद्भाव होता है। एवं पूर्वपदप्रकृति स्वर भी होता है। यथा—एकम् का द्वित्व से 'एकम् एकम्' यहां बहुव्रीहि समान होने से समासत्व प्रयुक्त प्रातिपदिकत्व है एवं प्रातिपदिकत्व प्रयुक्त उभय सुप् का 'सुपो धातुप्रातिपदिकयोः' से लुक् हुआ। एवं बहुव्रीहि भाव प्रयुक्त प्रातिपदिकत्व निबन्धन 'एकैक' समुदाय से सुप् विभक्ति एकवचन प्रथमा का आया है। एवं स्त्रीलिङ्ग में एकया का द्वित्व बहुव्रीहिवद्भाव विभक्ति द्वय का लोप एवं पुंवद्भाव हुआ "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" से अथवा 'स्त्रिया भाषितपुंस्कात्' से। एकैका से तृतीया एकैकया आहुत्या। यहां 'एक एकया' यह विशेष पुंवद्भाव प्रयुक्त है। अन्यथा एका ऐसा पूर्वभाग में अवग्रह होता जो इष्ट नहीं है।

एकं बहुव्रीहिवत् सूत्र बहुव्रीहिवद् भाव का अतिदेश करता है तो भी न बहुव्रीहौ से साध्यकार्य जो सर्वनाम का निषेध यहां नहीं होता है अर्थात् यहां सर्वनाम संज्ञा होती ही है। कारण कि "विभाषा दिक्समासे बहुव्रीहौ" १।१।२८ से बहुव्रीहि की 'न बहुव्रीहौ' १।१।२८ में अनुवृत्ति आती पुनः न बहुव्रीहौ में क्रियमाण बहुव्रीहि ग्रहण व्यर्थ होकर, 'शब्दाधिक्यात् अर्थाधिक्यम्' अर्थात् अधिक शब्द प्रयुक्त यहां अधिक अर्थ होगा वह यह है कि मुख्य = प्रधान जहां बहुव्रीहित्व है, वहां ही वह सर्वनाम संज्ञा का निषेध करता है, अतः आरोपित बहुव्रीहित्व में सर्वनाम संज्ञा होती है प्राचीन आचार्यों का मत है।

वस्तुतः 'न बहुव्रीहौ' सूत्र का भाष्यकार ने प्रत्याख्यान ही किया है। उनके मत में सूत्र ही नहीं अतः सर्वनाम संज्ञा का उससे निषेध की शङ्का ही निर्मूल है। सूत्रकार के मत में "न बहुव्रीहौ" सूत्र यद्यपि है किन्तु वह बहुव्रीहि समासार्थ जो अलौकिक विग्रह वाक्य तद्घटक जो सर्वादि उनकी सर्वनाम संज्ञा निषेधक है। न कि बहुव्रीहि समास में, क्योंकि समास करने पर समास घटक सर्वाद्यर्थ विशेषणीभूत रूप उपसर्जन न होने पर संज्ञोपसर्जन का सर्वादि में पाठ नहीं सूत्र व्यर्थ होगा।

अतः वहां तादर्थ्य में बहुव्रीहिपद है अर्थात् बहुव्रीहि समास के लिए अलौकिक विग्रह परक है। अतः अतिदेश के विषय में सर्वनाम संज्ञा का निषेधविषयिणी शङ्का का यहां अवसर ही नहीं है। जब शङ्का का ही अनवसर ऐसी परिस्थिति में समाधान प्रयास व्यर्थ है। अतः 'एकैकस्मै' यहां सुप् लुक् ्वद्भाव बहुव्रीहित्व के अतिदेश से द्वित्व के बाद हुआ किन्तु सर्वनामत्व का अभाव न हुआ, ङे को स्मै आदेश हुआ है। दानक्रिया का उद्देश्य में चतुर्थी विभक्ति है प्रत्येक को उद्देश्य-कर तुम दान दो यह अर्थ है।

## २१४६ आबाधे च ८।१।१०।

पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च। गतगतः। विरहात् पीड्यमान-स्येयमुक्तिः। बहुव्रीहिवद्भावात् सुब्लुक्। गतगता। इह पुंवद्भावः।

इष्टजनवियोग प्रयुक्तपीडा = दुःख गम्यमान रहे वहां द्वित्व होता है, एवं बहुव्रीहिसमान होता है। गतः यहां गम् धातु गम् के मकार का 'अनुदात्तोपदेश' से लोप है। गतः = का अर्थ संयोगजनकव्यापारकर्ता अर्थ है, द्वित्व से गत, गतः हुआ बहुव्रीहिवद्भाव से प्रातिपदिक संज्ञा उभयसुप् का लोप समुदाय से सु रुत्व विसर्ग से गतगतः = विरहवेदनाजन्य-पीडायुक्त इष्टजन की उक्ति यह है। इसी प्रकार स्त्रीलिङ्ग में गता, गता टाबन्त है द्वित्वादि पुंवद्-भाव समुदाय से विभक्ति उसका लोप 'गतगता' कन्या आदि के विरहजन्यपीडावती माता की उक्ति है। कन्या ससुरार जाती है उस समय माता को कष्ट होता है अतः पीडा गम्यमान यहां है।

## २१४७ कर्मधारयवदुत्तरेषु ८।१।११।

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यम्। प्रयोजनं सुब्लोपपुंवद्-भावान्तोदात्तत्वानि।

इससे परवर्ती द्विरुक्त स्थल में कर्मधारय समास समान कार्य होता है। कर्मधारयत्व के अति-देश का प्रयोजन ये हैं—सुप् का लोप, 'पुंवत् कर्मधारयजातीयेषु' से पुंवद्भाव, एवं 'समासस्य' सूत्र से अन्तोदात्तत्व है।

## २१४८ प्रकारे गुणवचनस्य ८।१।१२।

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत्, 'कर्मधारयवत्' उत्तरेष्वित्यधिकारात्। तेन पूर्वभागस्य पुंवद्भावः। समासस्यान्तोदात्तत्वञ्च। पटुपट्वी। पटुः पटुः। पटुसदृशः, ईषत् पटुरिति यावत्। गुणोपसर्जनद्रव्य-वाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते। शुक्लशुक्लं रूपम् शुक्लशुक्लः पटः। ॐ आनुपूर्व्ये द्वे वाच्ये ॐ। मूले मूले स्थूलः।

सादृश्यार्थ में गुण वाचक का द्वित्व होता है। एवं 'कर्मधारयवदुत्तरेषु' के यहां अधिकार होने से कर्मधारय समान होता है। अतः स्त्रीलिङ्ग में पूर्व भाग में पुंवद्भाव एवं 'समासस्य' सूत्र

से अन्तोदात्तत्व भी होता है। वोतोगुणवचनात् में ङीषन्त पट्वी का द्वित्व पुंवद्भाव, अन्तोदात्त, पटुपट्वी। पुंल्लिङ्ग में पटुः का द्वित्व विभक्ति लोप अन्तोदात्त समुदाय से विभक्ति पटुः पटुः। ईषत् पटुत्ववान् यहां 'गुणस्य' सूत्र में कहते वचनग्रहण सामर्थ्य से गुण है प्रकारीभूत अर्थात् उपसर्जन ऐसे द्रव्यार्थक का ग्रहण करना अर्थात गुणविशिष्ट गुणिवाचक शब्द यहां गृहीत है। एवं केवल गुणवाचक जो शब्द उनका भी गुणवचन से ग्रहण यहां करना चाहिये। 'शुक्लम्' गुणवाचक है रूप का प्रत्यायक है द्वित्व सुप् लुक् अन्तोदात्त समुदाय से विभक्ति शुक्लशुक्लं रूपम्। द्रव्यार्थक शुक्लः द्वित्वादिकार्य शुक्लशुक्लः पटः। * क्रमत्वरूप आनुपूर्व्य अर्थ प्रतीयमान रहे वहां द्वित्व होता है। यथा मूले मूले स्थूलः ( वृक्षः )।

❀ सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः ❀ सर्प सर्प सर्प बुध्यस्व, बुध्यस्वबुध्यस्व। ❀ क्रियासमभिहारे च ❀। लुनीहि लुनीहीत्येवायं लुनाति। नित्यवीप्सयोरिति सिद्धे भृशार्थे द्वित्वार्थमिदम्। पौनःपुन्येऽपि लोट्। सह समुच्चित्य द्योतकतां लब्धुं वा।

❀ कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये ❀। ❀ समासवच्च बहुलम् ❀। बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्।

❀ असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः ❀। अन्योऽन्यं विप्रा नमन्ति। अन्योऽन्यौ। अन्योऽन्यान्। अन्योऽन्येन कृतम्। अन्योऽन्यस्मै दत्तमित्यादि। अन्योऽन्येषां पुष्करैरामृशन्त इति माघः। एवं परस्परम्। अत्र कस्कादित्वात् विसर्गस्य सः। इतरेतरम्। इतरेतरेणेत्यादि। ❀ स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः ❀। अन्योऽन्याम्। अन्योऽन्यम्। परस्पराम्। परस्परम्। इतरेतराम्। इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः।

* सम्भ्रमसहित प्रवृत्ति होने पर इच्छानुसार अनेक बार प्रयोग न्यायसिद्ध है। क्रियासमभिहार में द्वित्व होता है। यथा लुनीहि लुनीहि। यहां 'नित्यवीप्सयोः' से द्वित्व सिद्ध था किन्तु भृशार्थ में द्वित्व के लिए एवं पौनःपुन्य अर्थ में लोट् एवं द्वित्व उभय का समुच्चयार्थ करके द्योतकता लाभार्थ यह वचन है। * कर्मव्यतिहार में सर्वनामसंज्ञक शब्द का द्वित्व होता है। यह समास के समान बहुल होता है। यहां बहुल ग्रहण से अन्य एवं पर शब्द समासवत = समास समान नहीं होते। इतर शब्द को तो नित्य समासवत होता है। अर्थात् समासवद्भाव हुआ। जहां असमासवद्भाव है वहां पूर्वपदस्थ सुप् के स्थान में सु होता है। यथा अन्योऽन्यं विप्रा नमन्ति आदि। माघ कवि की कविता में भी यह प्रयोग है—अन्योन्येषाम् इति। इसी प्रकार परस्परम् में भी ज्ञान करना चाहिये। यहां कस्कादि पाठ प्रयुक्त विसर्ग को सकारादेश है।

स्त्रीलिङ्ग एवं नपुंसकलिङ्ग शब्द से पर विभक्ति को विकल्प से आम् होता है। अन्योऽन्याम्। अन्योन्यम् इत्यादि।

अत्र केचित् आमादेशो द्वितीयाया एव, भाष्यादौ तथैवोदाहृतत्वात्। तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः। अन्ये उदाहरणस्य दिङ्मात्रत्वात् सर्वविभक्तीनामामादेशमाहुः।

इस स्थल में कोई कहता है कि द्वितीया को ही आमादेश होता है क्योंकि भाष्यादि आकर ग्रन्थों में द्वितीयान्त में ही आमादेश घटित उदाहरण है । अन्य आचार्य कहते हैं कि उदाहरण वे दिक् प्रदर्शनार्थ हैं । वे ही उदाहरण हैं ऐसा आग्रह न करना। भाष्य में कहा भी है "न चोदाहरण-मादरणीयम्" इति मेरे द्वारा प्रदर्शित उदाहरणों से अतिरिक्त उदाहरण ही नहीं ऐसा भ्रम न करना अर्थात् अन्य उदाहरण मेरे द्वारा अनुक्त भी है । अतः प्रकृति में सर्व विभक्तियों के स्थान में विकल्प से आम्भाव होता ही है ।

"दलद्वये टाबभावः क्लीबे चाड्विरहः स्वमोः ।
समासे सोरलुक् चेति सिद्धं बाहुलकात् त्रयम् ।।"

तथाहि— अन्योऽन्यं परस्परमित्यत्र दलद्वयेऽपि टाप् प्राप्तः । न च सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः, अन्यपरयोरसमासवद्भावात् । न च द्विर्वचनमेव वृत्तिः, "यां यां प्रियः प्रैक्षत कातराक्षीं सा सा" इत्यादावतिप्रसङ्गात् । अन्योऽन्यमितरेतरमित्यत्र च अद्डतरादिभ्य इत्यद्ड् प्राप्तः । अन्योऽन्यसंसक्तम् अहस्त्रियामम् । अन्योऽन्याश्रयः । परस्पराक्षिसादृश्यम् , अदृष्टपरस्परैरित्यादौ सोर्लुक् च प्राप्तः, सर्वं बाहुलकबलेन समाधेयम । प्रकृतवार्तिकभाष्योदाहरणं स्त्रियामिति सूत्रे 'अन्योन्यसंश्रयं त्वेतदि'ति भाष्यं चात्र प्रमाणमिति ।

श्लोक का अर्थ—दोनों दल में टाप् का अभाव, नपुंसक में सु एवं अम् के स्थान में अद्ड् का अभाव, एवं समास में प्रत्यय का अलुक्, यह तीन प्रकार का कार्य बाहुलक से सिद्ध होता है। यथा अन्योन्यम् , परस्परम् , इस स्थल में दोनों दल में टाप् प्राप्त हुआ, अन्य एवं पर में असमासवद्भाव से "सर्वनाम्नो वृत्तिमात्रे" से पुंवद्भाव नहीं प्राप्त है, यदि द्विर्वचन को ही वृत्ति मानोगे तो 'यां यां प्रियः' इत्यादि की असिद्धि होगी—प्रिय ने जिन जिन प्रिया को देखी वे वे लज्जा से नतमुखी हुई । 'अन्योन्यम्' 'इतरेतरम्' यहां अद्डादेश प्राप्त हुआ । अन्योन्य-संसक्तम् आदि में सु का लोप प्राप्त हुआ इन सभी का समाधान बाहुलक से करना । प्रकृ वार्तिक, भाष्योदाहरण, 'स्त्रियाम्' सूत्र में अन्योन्यसंश्रयम् ऐसा भाष्य इसमें प्रमाण है ।

## २१४९ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ८।१।१३।

प्रियप्रियेण ददाति प्रियेण वा । सुखसुखेन ददाति, सुखेन वा । द्विर्वचने कर्मधारयवद्भावात् सुपि लुकि तदेव वचनम् । अतिप्रियमपि वस्तु अनायासेन ददातीत्यर्थः ।

यहां द्वित्वोत्तर समासवद्भाव विभक्ति लुक् समुदाय से पुनः पूर्व सदृशी विभक्ति प्रिय-प्रियेण ददाति । पक्ष में प्रियेण । इसी प्रकार सुखसुखेन । सुखेन वा । द्विर्वचन में कर्मधारयवद्भाव से विभक्ति लुक् पुनः वही वचन । अत्यधिक प्रिय वस्तु को भी वह अनायास से दान करता है ।

## २१५० यथास्वे यथायथम् ८।१।१४।

'यथास्वम' इति वीप्सायाम् अव्ययीभावः । योऽयमात्मा यच्चात्मीयं तद्-यथास्वम् , तस्मिन् यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते । यथायथं ज्ञाता यथास्वभावमित्यर्थः । यथाऽत्मीयमिति वा ।

आत्मा एवम् आत्मीय दोनों को यथास्व कहते हैं। क्योंकि स्वशब्द का आत्मा एवं आत्मीय दोनों अर्थ में यथा शब्द का द्वित्व एवं नपुंसकलिङ्गत्व निपातन से सिद्ध है। सूत्र में वीप्सा अर्थ में अव्ययीभाव करना इससे 'यथास्वम्' की सिद्धि हुई है। यथायथं ज्ञाता = यथास्वभाव या यथात्मीय ज्ञाता।

**२१५१ द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ८।१।१५।**

द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु। तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम्। इतरे विषयभूताः। द्वन्द्वं मन्त्रयते, रहस्यमित्यर्थः। मर्यादा = स्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेणापीति मर्यादार्थः। व्युत्क्रमणम् = पृथगवस्थानम्।

द्वन्द्वं व्युत्क्रान्ताः। द्विवर्गसम्बन्धेन पृथगवस्थिताः। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। द्वन्द्वं संकर्षणवासुदेवौ। अभिव्यक्तौ साहचर्येणेत्यर्थः। योगविभागादन्यत्रापि द्वन्द्व इष्यते।

इति द्विरुक्तप्रकरणम्।

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्धं समाप्तम्।

रहस्य, मर्यादा, वचन, व्युत्क्रमण, यज्ञपात्रप्रयोग, अभिव्यक्ति इन अर्थों में द्विशब्द का द्वित्व होता है एवं पूर्वपदको अम्भाव, एवं उत्तरपद को नपुंसकत्व निपातन से सिद्ध होता है। पूर्वोक्त अर्थों में रहस्य एवं द्वन्द्व शब्दवाच्य अर्थ है। एवं अन्य सब विषयभूत है।

द्वन्द्वं मन्त्रयते = एकान्त में परामर्श करता है। स्थिति का अनतिक्रमण को मर्यादा कहते हैं। द्वन्द्वं मिथुनीयन्ति। यहां पशुओं में गम्यागम्य विचार नहीं है मानव की तरह माता पुत्र से पौत्र से प्रपौत्र से मिथुनत्व प्राप्त होती है यह पशुओं की मर्यादा है, स्थिति का अतिक्रमण यहां नहीं है। पृथक् जो अवस्थान उसको व्युत्क्रमण कहते हैं।

यथा द्वन्द्वं व्युत्क्रान्ताः = दो वर्ग के सम्बन्ध से पृथक् अवस्थित। द्वन्द्वं यज्ञपात्राणि। संकर्षणवासुदेवौ 'द्वन्द्वम्' यहां साहचर्य से अभिव्यक्त योगविभाग से सूत्रनिर्दिष्ट अर्थों से भिन्न अर्थ में भी 'द्वन्द्वम्' होता है।

गुजरातप्रान्तान्तर्गतवसाइ ( डामला ) नगराभिजनवास्तव्येन पञ्चाशद्वायनतो वाराणसीकृताखण्डनिवासेन विश्वविख्यातकाशीस्थराजकीयसंस्कृतमहाविद्यालय—वाराणसेयसंस्कृतविश्वविद्यालयपूर्वप्राध्यापकेन पवित्रतमौदीच्यब्राह्मणकुलोद्भवेन श्रीदिवालीदेवीजननीजातेन विद्वद्वरश्रीनीलकण्ठशास्त्रिपञ्चोलितनुजन्मना सर्वतन्त्रस्वतन्त्रपूज्यगुरुवरश्रीसभापतिशर्मोपाध्यायप्रधानशिष्येण श्रीबालकृष्णशास्त्रिपञ्चोलिना विरचिता वैयाकरणसिद्धान्तकौमुदीव्याख्या सविमर्शा रत्नप्रभा तस्याः पूर्वार्द्धं समाप्तम्।

इति शम्।



# समासादि-द्विरुक्तान्तसूत्रसूची

# द्विरुक्तान्त-वार्तिक सूची

## द्विरुक्तान्त-परिभाषासूची





१. **काशिका।**
वामन और जयादित्य कृत, पाणिनीय व्याकरण की टीका। शोभित मिश्र द्वारा भूमिका, नोट्स, नारायण मिश्र कृत हिन्दी टीकादि। १-२ भाग। संपूर्ण

२. **प्राकृतप्रकाशः-** वररुचि कृत।
भामह कृत-'मनोरमा' संस्कृत टीका तथा मंथुराप्रसाद कृत हिन्दी टीका उदयराम शास्त्री डबराल कृत नोट्स भूमिका। सं० जगन्नाथ शास्त्री होशिंग।

३. **प्रौढ़मनोरमा-** भट्टोजिदीक्षित कृत।
हरिदीक्षित कृत 'लघुशब्दरत्न' भैरवमिश्र कृत 'भैरवी', वैद्यनाथ पायगुंडे 'भाव प्रकाश' तथा गोपाल शास्त्री नेने कृत 'सरला' टीका। अव्ययी-भावान्त।

४. **लघुशब्देन्दुशेखरः-** नागेश भट्ट कृत।
भैरवमिश्रकृत 'चन्द्रकला' भैरवी टीका। गोपाल शास्त्री नेने कृत नोट्स १-२ भाग संपूर्ण।

५. **लघुसिद्धान्तकौमुदी-** वरदराज कृत।
'ललिता' संस्कृत हिन्दी टीका सहित। डॉ. दीनानाथ तिवारी डॉ. कौशलकिशोर पाण्डेय।

६. **वर्त्तिकप्रकाशः।**
अष्टाध्यायी की वृति काशिका के वार्तिको की व्याख्या, आनन्द प्रकाश मेधाथी।

शाखाएं :

**चौखम्भा संस्कृत भवन**
**पोस्ट बाक्स नं० ११६०**
चौक, (दि बनारस स्टेट बैंक बिल्डिंग)
वाराणसी-२२१ ००१ (भारत)
फोन : ३२०४१४

**चौखम्भा पब्लिकेशन्स**
४२६२/३ अंसारी रोड, दरियागंज
**नई दिल्ली-११०००२**
**फोन : ३२६८६३९, ३२५९०५०**
**E-mail : chaukhambha@mantramail.com**

मुद्रक : मित्तल आफसेट, वाराणसी।